भारत-स्वातन्त्र्य-स्वर्ण-जयन्ती-ग्रन्थमाला-४




# काव्यविच्छित्तिमीमांसा

जयमन्तमिश्रः



राष्ट्रिय-संस्कृत-संस्थानम्

भारत- स्वातन्त्र्य-स्वर्ण-जयन्ती-ग्रन्थमाला — 8

# काव्यविच्छित्तिमीमांसा

जयमन्तमिश्रः



राष्ट्रिय-संस्कृत-संस्थानम्

1998

प्रकाशकः
डॉ० कमलाकान्तमिश्रः,
निदेशकः
राष्ट्रियसंस्कृतसंस्थानम्
५६-५७, इन्स्टिट्यूशनल एरिया, जनकपुरी,
नई दिल्ली - ११००५८
दूरभाष : ५५४०९९३, ५५४०९९५



विक्रम संवत् २०५५

प्रथमं संस्करणम् १९९८

मूल्यम् : रूपये १००.००



मुद्रकः
नागप्रकाशकः
११-ए यू० ए० जवाहर नगर, दिल्ली-७

## ।। ॐ नमो मङ्गलमूर्तये ।।

एकः सन्नपि भिन्नं
    धत्ते श्यामं सुवर्णमयरूपम्।
अत्मारामो राधारमणो
    भक्तान् निजान् हि रञ्जयितुम्।।१।।

आनन्दचिन्मयसदुज्ज्वलविग्रहोऽपि
    भक्तानुबन्धवशविग्रहमातनोति।
लीलातनुर्वितनुते विविधाञ्च लीलाम्
    रासेश्वरो विजयते भगवान् रसात्मा।।२।।

निर्दूषणा गुणवती रसभावपूर्णा
    सालङ्कृतिः सरस-कोमलवर्णराजिः।
श्लाघ्या सुवृत्तकवितेव मनोऽभिरामा
    श्रीराधिका जयति मञ्जुलकृष्णमूर्तिः।।३।।

कुरुतान्मनोरथं मे
    पूर्णं तूर्णं स सच्चिदानन्दः।
व्रतमेतद्धि तदीयं
    शरणापन्नस्य रञ्जनं सततम्।।४।।

# प्राक्कथनम्

*योऽनूचानस्स नो महान्* इत्युद्दिश्य संस्कृतसंरक्षणसंवर्धनप्रचारप्रसारात्मकं स्वोद्देश्यं साधु निर्वहदिदं राष्ट्रियसंस्कृतसंस्थानं भारतस्वातन्त्र्यस्वर्णजयन्तीं विविधैश्शैक्षिककार्यक्रमैरायोजयदिति विज्ञाय समेषां विदुषां संस्कृतानुरागिणां च मनांस्यवश्यं मोमुद्येरन् ।

प्राचीनशास्त्राणां संरक्षणे, संवर्धने, संस्कृताध्ययनपरम्पराया राष्ट्रियैकात्मतासंवर्धनशक्तेश्च प्रचारार्थं संस्थानेनानेन निरन्तरं विहितं सत्प्रयत्नं योगदानं च विद्वत्समवायस्सर्वथाभिनन्दतीति विश्वस्यते ।

भारतस्वातन्त्र्यस्वर्णजयन्तीमभिलक्ष्य प्रवर्तितायां योजनायां राष्ट्रस्यास्य विभिन्नेषु प्रान्तेषु विद्योतमानैर्विद्वत्तल्लजैः नानाशास्त्राणि, तत्र निहितानि वैज्ञानिकतत्त्वानि चाधिकृत्य विरचितानि ग्रन्थकुसुमानि सादरं सञ्चित्य सङ्ग्रथ्य च भारत-स्वातन्त्र्य-स्वर्णजयन्ती-ग्रन्थमालात्वेन तत्रभवतां समक्षमुपस्थाप्य महानानन्दस्सन्तोषश्चोपजायेते ।

तत्रेदं **काव्यविच्छित्तिमीमांसाख्यं** ग्रन्थकुसुमं कामेश्वरसिंहदरभङ्गासंस्कृतविश्वविद्यालयस्य पूर्व-कुलपतिभिः साहित्यव्याकरणादिशास्त्रमर्मज्ञैः राष्ट्रपतिसम्मानितैः आचार्यजयमन्तमिश्रमहोदयैः प्रणीतम् । ग्रन्थेऽस्मिन् काव्यप्राणभूता रसध्वन्यादयः तत्सौन्दर्यहेतवः गुणालङ्कारौचित्यादयश्च काव्यशास्त्ररीत्या सरलप्रासादिकशैल्या विवेचिताः । ग्रन्थोऽयं काव्यशास्त्रजिज्ञासूनामुपकाराय कल्पत इत्याशास्यते । एतादृशम् अनुपमं ग्रन्थरत्नं

संस्थानस्य भारत-स्वातन्त्र्यस्वर्ण-जयन्तीग्रन्थमालायै प्रस्तुतवद्भ्यः आचार्य-मिश्रमहोदयेभ्यः अस्माकं धन्यवादाः समर्प्यन्ते ।

भारतस्वातन्त्र्यस्वर्णजयन्तीसमारोहाङ्गत्वेन संस्थानेन आयोजितेषु विविधशैक्षिकानुष्ठानेषु, विशेषतो ग्रन्थमालायाः आयोजनप्रकाशनादिकार्येषु कृतभूरिपरिश्रमाः अस्माकं सहयोगिनः विशेषेण डॉ० सविता-पाठक, डॉ० विरूपाक्ष वि०जड्डीपाल-प्रभृतयः साधुवादार्हाः ।

नागप्रकाशनस्याधिकारिणः स्वल्पीयसि काले ग्रन्थममुं सम्मुद्र्य यथासमयं लोकार्पणाय च प्रस्तूय अस्माकं सङ्कल्पसिद्धौ विशिष्टं सहयोगं कृतवन्तः । एतदर्थं ते धन्यवादार्हाः ।

११.०९.१९९८ कमलाकान्तमिश्रः

नवदेहली निदेशकः

राष्ट्रियसंस्कृतसंस्थानम्

# अवतरणिका

अनादिकालाज्जगतः सृष्टिरिव काव्यजगतोऽपि सृष्टिस्तथैव जायमाना दरीदृश्यते। तत्र कश्चित् साक्षात्कृतधर्मा तपस्तप्यमानो मनीषी कविः ध्यानावस्थितचेतसावलोक्य यथास्थितं तत् प्रकटयति। कोऽपि चिन्तनपरः, कोऽपि शोकाकुलः, कोऽपि निर्विण्णः, कोऽपि सदुपदेशकः, कोऽपि स्वान्तःकरणमेव सुखयितुकामः, कोऽपि लोकिकदुःखप्रशमनपूर्वक-सुखमासादयितुकामः, कोऽपि लक्ष्मीं प्रसादयितुमनाः कोऽपि शरच्चन्द्र-मरीचि-धवलं यशोऽधिलिप्सुः स्वप्रतिभादिसमृद्धिवैशिष्ट्यानुरूपं काव्यं रचयति, तदनुरूपं फलं लभमानः सुखमसुखं वा समश्नुते। इत्थ-मनादिकालात् प्रचलितेयं काव्य-सृष्टिपरम्परा अद्यापि प्रचलति, श्वोऽपि प्रचलिता।

तत्र सर्वोऽपि कविः, सुकविः प्राथम्येन स्वात्मानं परात्मानञ्च प्रमोदयितुं काव्य-कर्मणि प्रवर्तते। कश्चित् प्रतिभा-व्युत्पत्ति-वैभवेन तत्र साफल्यं लभते, कश्चिच्च प्रतिभा-व्युत्पत्तिदारिद्र्येण अभ्यसन्नपि तत्र वैफल्यमासादयते।

तत्र सुकविः काव्ये कविकर्मकौशलेन कामपि विच्छित्तिं, कमपि चमत्कारं, किमपि सौन्दर्यं वाधातुमेव प्रयतते नात्र कापि विचिकित्सा। ततः परं तद्गुण-दोष-विवेचनपरः आलोचकः तत्र धावति।

**रविरपि यत्र न गच्छति**
**गच्छति तत्रापि शक्तिमान् सुकविः।**
**कविरपि यत्र न गच्छति**
**प्रविशत्यालोचकस्तत्र॥**

इत्याभाणकं चरितार्थयन् स्वकीयलोचनेन काव्यनिष्ठ-सौन्दर्यमवलोकयन् तत्रत्यं गुण-दोषञ्च समालोचयन् तस्य काव्यवपुषः शल्यचिकित्सां विदधाति।

आलोचकमहाशय-विषये एवमप्यनुश्रूयते यत् एकेन सुकविना एकां नवोढां वर्णयता– **नहि नहि नहीति प्रकलते** इति नवोढाया उक्तिः स्वपद्ये प्रकटिता इति।

अत्र नवोढया वारत्रयं प्रयुक्तस्य नहीति पदस्य एको हि समालोचकः रजोदर्शनस्य तृतीयेयं रजनीति तात्पर्यं समवाप्य **तथाचरितुं सा निर्दिशतीति** व्याचचक्षे। आलोचकवर्यस्य ईदृशी सूक्ष्मदृष्टिर्यत्र तत्रावलोक्यते सुधिया।

एवं हि काव्य-विच्छित्तिं मीमासमानाः समालोचकाः काव्यशास्त्र-विशेषज्ञाः स्वस्वमतानुसारं काव्यविच्छित्तिं तद्बीजं च व्यलोकयन्तः स्व-सिद्धान्तं स्थापयामासुः। यतस्तैर्विच्छित्तिबीजानि स्वलोचनैर्यथा दृष्टानि तथैव साग्रहं स्व-काव्यशास्त्रीयग्रन्थेषु पल्लवितानि तन्मूलकानि च प्रस्थानानि रसालङ्कार-रीतिध्वनिवक्रोक्त्यौचित्यरूपाणि प्रतिष्ठापितानि।

प्रकृतकृतौ काव्यविच्छित्तिमीमांसायाम् अस्या एव काव्यविच्छित्ते-र्विवेचनं विस्तरेण विदधता मयका कवि-कर्मकौशलजन्य-विशिष्टशब्दार्थरूपसत्काव्यस्य चरमविच्छित्तेः स्वरूपं, महत्त्वम्, कार्य-प्रयोजनञ्च प्रदर्शितानि।

**राष्ट्रियसंस्कृतसंस्थानस्य** सर्वविधविकासार्थ तत्परेण, भारतीयस्वा-**तन्त्र्यस्य** मोदावहे **स्वणजयन्तीवत्सरे**ऽस्मिन् पञ्चाशतो ग्रन्थानां निर्माणार्थं कृतसङ्कल्पेन **संस्थानस्य निदेशकमहोदयेन डॉ॰ कमलाकान्तमिश्रेण** एकं ग्रन्थं निबद्धुमनुरुद्धोऽयं जनः संस्थाननिदेशानुसारं काव्यविच्छित्ति-मीमांसेति नामकं ग्रन्थं निर्माय विपश्चितां परितोषाय एतेन विच्छित्ति-वासयोगाधिवासितग्रन्थकुसुमाञ्जलिना सुधी-समाजं समर्चयन् अमन्दमानन्दमनुभवतीति शम्।

बुद्धपूर्णिमा विदुषामाश्रवः
११/५/१९९८ **जयमन्तमिश्रः**

# विषयानुक्रमणिका

# कविप्रशंसा

अपारस्यास्य काव्यसंसारस्य एकः प्रजापतिः स्वाभीष्टजगन्निर्माता, कुबेर-विभवादपि भव्यतरस्य सारस्वतविभवस्य प्रदाता, काव्य-रसामृत-माधुर्यस्य पाययिता, सत्यं शिवं सुन्दरञ्चेति दिव्यपथं प्रदर्शयिता राष्ट्रस्य प्रयोजनानुरूपसाहित्यस्य स्रष्टा, नवराष्ट्रस्य निर्माता, स्वौजस्विकाव्य-निनादेन अलसानुत्साह-हतोत्साहानां जनानां समराङ्गणे सोल्लासम-वतारयिता सत्कविर्भवति, यस्य भारती नियतिकृतनियमरहितं, ह्लादैकमयम्, अनन्यपरतन्त्रं, नवरसरुचिरं भव्यं निर्माणमादधाना जगति चिरं विजयतेतराम्। एतादृशा एव जरामरणजन्यभयरहित-यशःशरीराः कवयः अभिवन्दनीया भवन्ति। अत एव एवमुच्यते–

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम्।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः[1]॥

**कविः**

एवंहि यस्य लोकोत्तरवर्णनानिपुणकर्म काव्यं भवति तस्य वाचकः कविशब्दः यास्कीयनिरुक्ते मेधाविनामसु पठितः व्युत्पत्त्या क्रान्तदर्शनार्थकः। अतीतानागत-विप्रकृष्टविषयकं युगपज्ज्ञानं यस्य, स क्रन्तदर्शन इत्युव्वटाचार्यो निर्वक्ति। एवञ्च क्रमधातोरौणादिके इन् प्रत्यये बाहुलकात् मस्य वत्वे रेफस्य लोपे च **कविरिति** निष्पद्यते।

अथवा गत्यर्थकात् कवतेरिनि प्रत्यये कविरिति व्युत्पद्यते। विश्वारूपाणि प्रतिमुञ्चते कविः। कविः सर्वाणि रूपाणि प्रज्ञानानि रूपवत् शोभनार्थेषु आबध्नातीत्यर्थः। अत एव मेधावी कविः क्रान्तदर्शनो भवति। **कवतेर्वा** इति निरूपयति महर्षियास्कः[2]।

१. निबन्धकुसुमाञ्जलिः, प्रथमसंस्करणम्, पृ०९।
२. निरुक्ते १२/२/१४१

अथवा **कवृ-वर्णने** इत्यस्मात् इनि प्रत्यये णिच्लोपे च कवयति-वर्णयति इति कविः इति सिद्ध्यति। एतेन यो हि अपूर्वचमत्कारि-वस्तु-वर्णने क्षमः स एव कविः, न तु इतिवृत्तमात्रवर्णनसमर्थः। अत एव भट्टतौतेन **काव्यकौतुक** उक्तम्-

**नानृषिः कविरित्युक्तम् ऋषिश्च किल दर्शनात्।**
**विचित्रभावधर्मांशतत्त्वप्रख्या च दर्शनम्॥**

**स तत्त्वदर्शनादेव शास्त्रेषु पठितः कविः।**
**दर्शनाद् वर्णनाच्चाथ रूढा लोके कविश्रुतिः[1]॥ इति**

अत्र न ऋषिः अनृषिः, न अनृषिः नानृषिः इति नञ्समासद्वयेन प्रकृतार्थं दृढतया यो हि परमार्थतः ऋषिः स एव कविर्नान्य इति प्रतिपाद्यते। महर्षियास्कस्य **ऋषिर्दर्शनात्**[2] इति निर्वचनानुसारेण दर्शनादेव ऋषिः। तच्च दर्शनं प्रकृते पदार्थस्य विचित्रभावस्य अन्तर्निहितधर्मस्य तत्त्वतो दर्शनम्। तादृशतत्त्वस्य अवलोकनादेव शास्त्रेषु स ऋषिः कवि-रिति कथ्यते। लोके तु वस्तुनः सूक्ष्ममपूर्वरूपं विलोक्य सरसमधुर-शब्दार्थद्वारा तद्रूपं वर्णयतीति कारणात् कविरित्युच्यते। एवञ्च ऋषिरूपे कवौ दर्शन-वर्णनयोरपूर्वसमन्वयो जायते।

अत एव भट्टतौतेन पुनस्तत्र प्रतिपाद्यते-

**प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।**
**तदनुप्राणनाज्जीवद्वर्णनानिपुणः कविः॥**
**तस्य कर्म स्मृतं काव्यम्.........'[3]॥**

एतावता नवनवोन्मेषशालिन्या प्रतिभया अनुप्राणितं यत् जीवद्वर्णनं तत्र यो हि निपुणः स एव वस्तुतः कविः।

---

१. हेमचन्द्रस्य काव्यानुशासने ३१६ पृष्ठे उद्धृतम्।

२. निरुक्ते २/३/१२१
तद्यदेनाँस्तपस्यमानान् ब्रह्म स्वयम्भु अभ्यानर्षत् त ऋषयोऽभवन् तद् ऋषीणाम् ऋषित्वं विज्ञायते। इति ब्राह्मणमप्येतस्मिन्नर्थे प्रमाणम्। तत्रैव

३. तत्रैव काव्यानुशासने।

इदमेव तथ्यं प्रकारान्तरेण प्रतिपादयतो भट्टनायकस्य मते यो हि सहृदयपाठकानर्थं ग्राहयति, भावनं कारयति, अर्थात् साधारणभावभूतैः स्फुरणं कारयति तथा आनन्दमनुभावयति स एव कविः।

प्रजापतिपदवीमारुरुक्षोः कवेः कर्मपथं निर्दिशन् आनन्दवर्धनाचार्यः प्रतिपादयति–नहि कवेरितिवृत्तमात्रनिर्वहणे किञ्चित् प्रयोजनम्, इतिहासादेव तत्सिद्धेः[१] अतश्च

वाच्यानां वाचकानां च यदौचित्येन योजनम्।
रसादि-विषयेणैतत् कर्म मुख्यं महाकवेः[२]॥

यतः परिपाकवतां[३] कवीनां रसादितात्पर्य-विरहे व्यापार एव न शोभते। रसादितात्पर्ये च नास्त्येव तद्वस्तु यदभिमतरसाङ्गतां नीयमानं न प्रगुणीभवति। अचेतना अपि भावा यथायथमुचित-रसविभावतया चेतन- वृत्तान्तयोजनया वा न सन्त्येव ते ये यान्ति न रसाङ्गताम्। तथाचेदमुच्यते–

अपारे काव्य-संसारे कविरेकः प्रजापतिः।
यथास्मै रोचते विश्वं तथेदं परिवर्तते॥

शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स एव वीतरागश्चेन्नीरसं सर्वमेव तत्॥

भावानचेतनानपि चेतनवच्चेतनानचेतनवत्।
व्यवहारयति यथेष्टं सुकविः काव्ये स्वतन्त्रतया॥

तस्मान्नास्त्येव तद् वस्तु यत् सर्वात्मना रस-तात्पर्यवतः कवे स्तदिच्छया तदभिमतरसाङ्गतां न धत्ते इति। एवं प्रकारेणैव काव्यं कुर्वन् कविः महाकवित्वपदवीं लभते।[४]

---

१. ध्वन्यालोके ३, १४ कारिकायां वृत्तौ।
२. तत्रैव ३, ३२।
३. यत्पदानि त्यजन्त्येव परिवृत्ति-सहिष्णुताम्।
तं शब्दन्यासनिष्णाताः शब्दपाकं प्रचक्षते॥
४. ध्वन्यालोके ३, ४३ कारिकायाम्।

ध्वन्यालोकमवलोकयितुं लोचनोन्मीलनं विदद्धता लोचनकारेण अभिनवगुप्तपादाचार्येण मन्यते यत् **अपूर्ववस्तुनिर्माणक्षमायाः प्रज्ञारूपायाः प्रतिभाया वैशिष्ट्यं रसावेशवैशद्यसौन्दर्यकाव्यनिर्माणक्षमत्वमेव।** ईदृक् प्रतिभासम्पन्नः अपूर्ववस्तुनिर्माणकुशल एव जनः कविर्भवति नान्यः। अयमेवभावः लोकोत्तरवर्णनानिपुणकविकर्मकाव्यमिति मम्मटाचार्यस्योक्तौ गुञ्जति।

काव्यनिर्मितिपद्धतौ कविः प्रथमं पदार्थदर्शनं करोति अर्थात् वस्तुनोविचित्रभावं, सूक्ष्मरूपं साक्षात्करोति। ततः समुचितललितशब्दार्थद्वारा तान् दृष्टपदार्थान् वर्णयति। भट्टनायकमतेन भावनेन भावकत्वेन वा मुख्य-व्यापारेण वा कविः स्वप्रतिभावैशद्येन वस्तुनः तदेवापूर्वरूपं भावयति। महिमभट्टमतेन प्रतिभावान् सत्कविः वस्तुनः सामान्यविशिष्टात्मके द्विविधे रूपे विशिष्टं रूपं प्रत्यक्षीकृत्य तदेवरूपं स्वप्रतिभया प्रकटयति। एवं हि भारतीयकाव्यशास्त्रानुसारेण कविः कर्ता, निर्माता, स्रष्टा, दर्शयिता, वर्णयिता, भावयिता, व्यञ्जयितेत्यादिशब्दैः व्यवह्रियते। अतः अमुष्यकवेः कर्म काव्यं, निर्माणं, निर्मितिः, सृष्टिः, विरचनमित्यादिशब्दवाच्यं भवति। एतेन कवेः प्रतिभा कारयित्री भवति न चानुकारयित्री।

एवं सति **अरस्तू**महोदयेन स्वकीयकाव्यशास्त्रे *Art is an Imitation* कलानुकरणं विद्यते। तत्र स्थापत्यमूर्तिनृत्यचित्रकाव्यरूपासु अनुकरणात्मिकासु पञ्चविधकलासु काव्यकलाया अपि अनुकरणात्मकतया काव्यमपि अनुकरणमेवेति यत् प्रतिपादितं तन्न समीचीनम्।

एतत् प्रसङ्गे **प्लेटो** महोदयेन उपर्युक्तमतमाक्षिपता **यदि नाम कला अनुकरणं तर्हि अनुकरणस्य अनुकरणत्वेन सत्यादतिदूरवर्तित्वात् कला नोपादेया**-*It is a copy of the copy twice removed from the truth* इति यदुक्तं तन्मनसि निधाय अरस्तू महाशयेन काव्यकलायाः सर्वोत्कृष्टे त्रासदीरूपे काव्यं करणं-निर्माणमिति निरूपयाञ्चक्रे[१]। तथा कवेः काव्यानुकरणेऽस्मिन् किमपि विशिष्टं नूतनं सर्जनं स्वीचक्रे।

---

१. द्र० प्रबन्धकुसुमाञ्जलिः पृ० ४१–४७.

अत्रेदं मनीषिभिर्विभावनीयं यत् कवेर्नवनिर्माणमिदं न सर्वथा अविद्यमानपदार्थ-सर्जनम्, अपि तु सत एव वर्ण्यमानपदार्थस्य चमत्कार-जनकं किमपि विशिष्टं निर्माणम्। अत एव वक्रोक्तिजीवितकारेण कुन्तकेन प्रतिपादितं यत् **न वर्ण्यमानस्वरूपाः पदार्थाः कविभिरभूताः ( अविद्यमानाः ) सन्तः क्रियन्ते। केवलं सत्तामात्रेण परिस्फुरतां चैषां तथाविधः कोऽप्यतिशयः पुनराधीयते येन कापि सहृदयहृदय- हारिणी रमणीयताधिरोप्यते**[1] इति। काव्ये उत्पाद्यमपि वस्तु तदेव महनीयं भवति यत् स्वकीयाहार्यरूपेऽपि अस्वाभाविकं न भवति। अत एव तेनोक्तम्—

**स्वभावव्यतिरेकेण वक्तुमेव न युज्यते।**
**वस्तु तद्रहितं यस्मात् निरुपाख्यं प्रसज्यते**[2]**।। इति।**

अर्थात् पदार्थस्वभावेन वर्जितं वस्तु असत् कल्पं सत् शशविषाणाय-मानं शब्दज्ञानस्य अगोचरं भवति। अत एव काव्ये विद्यमानवस्तुनि अति-शयस्याधानमेव कविकर्म इति निरूपयतानेन स्पष्टीकृतं यत् **तदेवं सत्तामात्रेणैव परिस्फुरतः पदार्थस्य कोऽप्यलौकिकशोभातिशय-विधायी विच्छित्तिविशेषोऽभिधीयते येन नूतनच्छायामनोहारिणा वास्तवस्थितितिरोधानप्रवणेन निजावभासोद्भासिततत्स्वरूपेण तत्कालोल्लिखित इव वर्णनीयपदार्थपरिस्पन्दमहिमा प्रतिभासते, येन विधातृव्यपदेशपात्रतां प्रतिपद्यन्ते कवयः। तदिदमुक्तम्—अपारे काव्यसंसारे इत्यादि**[3]। एतदेव हि **महिमभट्टेनापि व्यक्तिविवेके** निर्दिश्यते—

**विशिष्टमस्य यद्रूपं तत् प्रत्यक्षस्य गोचरम्।**
**स एव सत्कविगिरां गोचरः प्रतिभाभुवाम्**[4]**।। इति**

अयमत्र निर्गलितोऽर्थः—प्रजापतिपदवीं प्राप्तुं सत्कविः भट्टतौतानुसारं

---

१. वक्रोक्तिजीविते ३, २ कारिकायाम्।
२. तत्रैव १, १२।
३. तत्रैव ३, २ कारिकायाम्।
४. व्यक्तिविवेके २, १६।

दर्शनवर्णनयोः समन्वयनं, करोति, भट्टनायकानुसारं भावनमनुभावयति, कुन्तकमतेन अतिशयामादधाति, व्यञ्जनावादिमतेन अप्रकटित- पदार्थस्य व्यञ्जनं प्रकाशनं करोति, महिमभट्टानुसारेण कवि- प्रतिभागोचरस्य उद्घाटनं च विदधाति।

एतैश्च उपर्युक्तैर्विभिन्नरूपैः कविः विच्छित्तिजनकं वर्णनं विदधन्- महाकवित्वं लभते महाकाव्य-प्रयोजनञ्च साधयति। अत एव हेतोः भारतीयकाव्यसिद्धान्तानुसारं काव्यं विद्या न तु साधारणकला। अतो राजशेखरेण स्पष्टमुक्तं-**पञ्चमी साहित्यविद्या इति यायावरीयः। सा हि चतसृणामपि विद्यानां निष्यन्दः**[1] इति।

**कविसमयप्रसिद्धिः**

एतत् प्रसङ्गे इदमप्यत्र ध्यातव्यं यत्

**असतोऽपि निबन्धेन सतामप्यनिबन्धनात्।**
**नियमस्य पुरस्कारात् सम्प्रदायस्त्रिधा कवेः**[2]**॥**

इति त्रिविधकविसम्प्रदायानुसारं कविः क्वचित् असतामपि वस्तूनां निबन्धनं करोति, क्वचित् सतामपि पदार्थानां वर्णनं न करोति, क्वचिच्च नियमपुरस्कारेणैव वस्तुवर्णनं विदधाति। तथाहि–

(१) वास्तविकरूपेण लोके यद् वस्तु न भवति तदपि काव्ये कविभिर्निबध्यते। यथा-

**रत्नानि यत्र तत्राद्रौ हंसाद्यल्पजलाशये।**
**जलेऽमान्द्यं नभोनद्यामम्भोजाद्यं नदीष्वपि॥**

**तिमिरस्य तथा मुष्टिग्राह्यत्वं सूचिभेद्यता।**
**शुक्लत्वं कीर्तिपुण्यादौ काष्ण्यं चाकीर्त्यघादिषु॥**

---

१. काव्यमीमांसा
२. अलङ्कारशेखरे १६, ११

प्रतापे रक्ततोष्णत्वं रक्तत्वं क्रोधरागयोः।
ज्योत्स्ना-पानं चकोराणां शैवालं सर्ववारिषु॥
केसराशोकयोः सत्स्त्रीगण्डूषात् पादघाततः।
मासान्तरेऽपि पुष्पाणि, रोमालिस्त्रिवलिस्त्रियाम्॥

(२) कापि वास्तविकमपि वस्तु कविभिर्न निबध्यते। यथा-

वसन्ते मालती पुष्पं फलपुष्पे च चन्दने।
कामिदन्तेषु कुन्दानां कुड्मलेषु च रक्तता॥
नारीणां श्यामता पातः स्तनयोर्यच्च वा ह्रिये॥[१]

(३) क्वचित् नियमपुरस्सरमेव काव्ये वस्तु-वर्णनं कविना विधीयते तद्यथा-

हिमवत्येव भूर्जत्वक् चन्दनं मलये परम्।
हेमन्तशिशिरौ त्यक्त्वा सर्वदा कमलस्थितिः॥
सामान्यग्रहणे शौक्ल्यं पुष्पाम्भश्छत्रवाससाम्।
ध्वजचामरहंसानां हारस्य बकभस्मनोः॥
कृष्णत्वं शैलवृक्षादिमेघवारिधिवीरुधाम्।
भिल्लकाचासुराणां च धूपपङ्कशिरोरुहाम्॥
लौहित्यं धातुमाणिक्यजपारत्नविवस्वताम्।
पद्मपल्लवबन्धूकदाडिमीकरजादिषु॥
पीतत्वं शालिमण्डूकवल्कलेषु परागके।
वर्षास्वेव शिखिप्रौढिर्मधावेव पिकध्वनिः॥[२]

काव्यविच्छित्तिसाधनीभूतामिमामेव कविसमयप्रसिद्धिं सम्यक् सङ्कलयति विश्वनाथकविराजः

---

१. तत्रैव।
२. तत्रैव।

मालिन्यं व्योम्निपापे, यशसि धवलता वर्ण्यते हास-कीर्त्योः,
रक्तौ च क्रोधरागौ, सरिदुदधिगतं पङ्कजेन्दीवरादि।
तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो,
ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः॥

स्त्रीणां स्पर्शात् प्रियङ्गुर्विकसति बकुलः सीधुगण्डूषसेकात्
पादाघातादशोकस्तिलकुरबकौ वीक्षणालिङ्गनाभ्याम्।
मन्दारो नर्मवाक्यात् पटुमृदुहसनाच्चम्पको वक्त्रवातात्
चूतो गीतान्नमेरुर्विकसति च पुरो नर्तनात् कर्णिकारः॥

यथा वा-

पादाघातादशोको विकसति, बकुलो योषितामास्यमद्यैः
यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः।
मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतोः।
भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत्॥

अह्न्यम्भोजं, निशायां विकसति कुमुदं, चन्द्रिका शुक्लपक्षे
मेघध्वानेषु नृत्यं भवति च शिखिनां, नाप्यशोके फलं स्यात्।
न स्याज्जाती वसन्ते, न च कुसुमफले गन्धसारद्रुमाणाम्।
इत्याद्युन्नेयमन्यत् कविसमयगतं सत्कवीनां प्रबन्धे॥[१]

तथ्यमिदं सङ्केतयता दशरूपककृता धनञ्जयेन कविकर्मकौशलस्य वैलक्षण्यं निम्नप्रकारेण प्रतिपादितम्-

रम्यं जुगुप्सितमुदारमथापि नीच-
मुग्रं प्रसादि गहनं विकृतं च वस्तु ।
यद्वाप्यवस्तु कविभावकभाव्यमानं
तन्नास्ति यन्न रसभावमुपैति लोके। इति

---

१. साहित्यदर्पणे ७, १९

## कविसृष्टेर्विलक्षणता

ध्वनिप्रस्थापनपरमाचार्येण मम्मटेनापि प्रजापतेर्जगत्सृष्टेर्विलक्षणा सत्कवेः काव्यसृष्टिर्भवतीति

**नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारतीकवेर्जयति॥**

इति काव्यप्रकाशमङ्गलश्लोकेन प्रत्यपादि। तथाहि- विधातुर्जगति नियतिकृतनियमः असाधारणधर्मव्याप्तिरेव परिदृश्यते, यथा यत्र यत्र पद्मं तत्र तत्र सौरभं किन्तु कविनिर्मितौ कान्तामुखेऽपि प्रतिभानिर्मितसौरभादि परिदृश्यते। लोके नियतिकृतनियमेन=दैवरूपादृष्टनियमेन स्वर्गादियोग्य-शरीरान्तरोत्पादनद्वारैव स्वर्गादिप्राप्तिः, किन्तु **कविनिर्माणे स्वर्गप्राप्ति रनेनैव देहेन वरवर्णिनी** इति दर्शनात् अनेनैव शरीरेण स्वर्गप्राप्तिः इति स्पष्टमेव कविवाङ्निर्मितिः नियतिकृतनियमरहिता। सत्त्वरजस्तमोमयी विधातुः सृष्टिः सुखदुःखमोहस्वभावा, किन्तु कविप्रजापतेः सृष्टिः ह्लादैकमयी[1] आनन्दमात्रस्वभावा इति विलक्षणा। वेधसो जगती उपादानादिकारणपरतन्त्रा, किन्तु कविनिर्मितिः भारतीभिन्नस्य समवायादि-कारणस्यानधीनेति अनन्यपरतन्त्रा[2]। विधे रचना मधुराम्ललवणकटुकषाय-तिक्तभेदेन हृद्याहृद्यरूपाः षड्रसाः किन्तु कवेः रचना शृङ्गारहास्य-करुणरौद्रवीरभयानकबीभत्साद्भुतशान्तरूपेण नवरसरुचिरा[3] केवलं हृद्यैव।

एवञ्च विलक्षणसृष्टिकारकत्वेन कविर्विशिष्टप्रजापतिर्भवति। अत एव स विशिष्टकाव्यनिर्माणेन धर्मार्थकाममोक्षादिप्रयोजनानि साधयितुं प्रभवति। अतो हि कविभिः विषयीकृतानां सताम्, असताम्, नियमिता-नाञ्च कविसमयप्रसिद्धानां पदार्थानां वैविध्येन काव्ये वर्णनात्।

---

१. ह्लादैकमयीमित्यत्र एकशब्दः संख्येयवाचकः।
**तत् प्रकृतवचने मयट** (५/४/२१) इति सूत्रेण मयट्प्रत्ययः। एकं वस्तु प्राचुर्येण प्रस्तुतं यस्यां सा एकमयी। ह्लादेन एकमयीति **सुप्सुपेति** समासः। ह्लादेनेति **प्रकृत्यादिभ्य उपसंख्यानम्** इत्यभेदे तृतीया। तेन ह्लादमात्रप्रचुरामित्यर्थः।

२. अन्यस्य भारती भिन्नस्य परतन्त्रा अधीना न भवतीत्यर्थः।

३. नवसंख्याका रसा यस्यां सा नवरसा सा चासौ रुचिरा इति कर्मधारयः न तु नवानां रसानां समाहार इति। तथात्वे नवरसीत्यापत्तेः। अथवा मध्यमपदलोपी कर्मधारयः।

स्वभावव्यतिरेकेण वक्तुमेव न युज्यते।
वस्तु तद्रहितं यस्मान्निरुपाख्यं प्रसज्यते॥ इति

वक्रोक्तिजीवितकारस्य कुन्तकस्य कथनं कविसम्प्रदायसिद्ध-पदार्थातिरिक्तवस्तुपारमित्यमामनन्ति मनीषिणः। यतो हि-

कवीनां घटनान्येव चराचरविलक्षणा।
अकर्तुमन्यथाकर्तुं कर्तुं वा क्षमते जगत्॥[१]

एवं यथा हि कर्तुमकर्तुमन्यथाकर्तुं प्रभवति परमेश्वरस्तथैव महा-कविरपि प्रभवतीति सूचयति स्म दर्शनकान्तारपञ्चाननः **आलङ्कारिकः केशवमिश्रः** प्रसङ्गेऽस्मिन्।

जागतिकवस्तुनो यत् सामान्यं विशिष्टञ्चेति रूपद्वयं भवति, तत्र साधारणजना वस्तुनः साधारणरूपमवलोक्य न किमपि तज्जन्यं विशिष्टं चित्रं चित्ते चित्रयन्ति, किन्तु प्रतिभावान् सत्कविः तस्यैव वस्तुनो विशिष्टं रूपमवलोकयति, कमपि अपूर्वं तद्बिम्बं मनसि अवधारयति, किमपि हितकरं प्रयोजनं साधयितुं तस्य समुचितललितरमणीयपदपदार्थमयं वर्णनं करोति।

व्यावहारिकजीवने स्वसदने वयं प्रतिदिनं दुग्धस्य पचनं फेनायमानत्वम् अवलोकयामः, न किमपि विशिष्टं भावं भावयामः। सुकविना भर्तृहरिणापि कदाचित् पयसः तद्रूपम् अवलोकितं मानसे तद्विशिष्टं भावमवधार्य वर्णितम्—

क्षीरेणात्मगतोदकाय हि गुणा दत्ता पुरा तेऽखिलाः
क्षीरे तापमवेक्ष्य तेन पयसा ह्यात्मा कृशानौ हुतः।

गन्तुं पावकमुन्मनास्तदभवद् दृष्ट्वा तु मित्रापदं
युक्तं तेन जलेन शाम्यति सतां मैत्री पुनस्त्वीदृशी॥[२]

स्वीयं महत्त्वं न्यूनयदपि क्षीरमात्मगतोदकाय पूर्वं स्वकीयान्

---

१. केशवमिश्रस्य अलङ्कारशेखरे।

२. भर्तृहरि-नीतिशतके

अखिलान् गुणान् ददाति। मित्रतापन्नं नीरं क्षीरे तापमवेक्ष्ये प्रथमम् आत्मानं पावके आजुहोति। इमां मित्राहुतिरूपामापदं विलोक्य क्षीरमपि पावके गन्तुमुन्मनो भवति। पावके प्रविशत् क्षीरं पुनर्नीरमवाप्य शाम्यति। यथैव क्षीरनीरयोरियं मैत्री आदर्शरूपा, तथैव आदर्शरूपया सतां मित्रतया भाव्यमिति निर्दिशति महाकविः।

संस्कृतकाव्यजगति विशिष्टानां सत्कवीनां संख्या अनल्पापि समालोचकनिकषपरीक्षोत्तीर्णानांम महाकवीनां संख्या स्वल्पा एव। तत्र

कर्णाटराजस्य पुलकेशिद्वितीयस्य स्नुषा कवयित्री विज्जिका **कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः** इत्युद्घोषमसहमाना, काव्यादर्शे दण्डिनः सरस्वतीवन्दनाम्

**चतुर्मुखमुखाम्भोजवनहंसवधूर्मम।**
**मानसे रमतां नित्यं सर्वशुक्लासरस्वती॥"**

इति रूपां समाकर्ण्य दण्डिनि दण्डं प्रहरन्ती–

**नीलोत्पलदलश्यामां विज्जिकां मामजनता।**
**वृथैव दण्डिना प्रोक्तं सर्वशुक्ता सरस्वती॥**

इत्युद्घोषयन्ती त्रीनेव कवीन् कवय इति उपश्लोकयति स्म–

**एकोऽभून्नलिनात् ततश्च पुलिनाद् वल्मीकतश्चापरे**
**ते सर्वे कवयो भवन्ति गुरवस्तेभ्यो नमस्कुर्महे।**
**अर्वाञ्चो यदिगद्यपद्यरचनैश्चेतश्चमत्कुर्वते**
**तेषां मूर्ध्नि ददामि वामचरणं कर्णाटराजप्रिया॥**

एवं हि सप्तमशतककालीना विज्जिका आदिकविं[१] नलिनोद्भवं, लौकिकच्छन्दसामादिकविं वाल्मीकिं, कृष्णद्वैपायनंव्यासञ्च त्रीनेव सत्कवीनमन्यत।

---

१. तेने ब्रह्म हृदय आदिकवये मुह्यन्ति यत् सूरयः। श्रीमद्भागवतम् १/१/१

आनन्दवर्धनाचार्यः द्वित्राः पञ्चषा एववा महाकवयः इत्येवमभिधाय द्वित्रान् पञ्चषानेव वा महाकवीन् मनुते स्म।

पण्डितराजजगन्नाथस्तु–

कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः।
नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः॥

इत्युद्धोषयन् भूत-वेतालानां नृत्यमिव अन्येषां काव्यं हास्यावहं भवतीति प्रत्यपादयत्। भवन्तु नाम इमाः उपर्युक्ता अत्युक्तयः, किन्तु सत्कवीनां संख्या स्वल्पैवेति समालोचकविचक्षणा मन्यन्ते।

एवं मनीषी सुकविर्यत् काव्यं कुरुते शिवम्।
तल्लोकवेदमोदाय आकल्पं कल्पते ध्रुवम्॥

## काव्यं तल्लक्षणानि च

लोकोत्तरवर्णनानिपुणकवेर्यत् कर्म काव्यमुच्यते[१] तस्य स्वरूप-निरूपणे प्राचीनकालादिदानीं यावन्मननिरता मनीषिणः स्वमतानुसारं विवेचनपुरस्सरं काव्यलक्षणं कुर्वन्तो दृश्यन्ते। तत्र भरतमुनेः नाट्यशास्त्रे प्रथमं काव्यलक्षणमित्थं समुपलभ्यते–

मृदुललितपदार्थं गूढशब्दार्थहीनं,
बुधजनसुखयोग्यं बुद्धिमन्नृत्ययोग्यम्।
बहुरसकृतमार्गं सन्धिसन्धानयुक्तं,
भवति जगति योग्यं नाटकं प्रेक्षकाणाम्[२]॥

मृदुशब्दसुखार्थं च कविः कुर्यात्तु नाटकम्[३]। इति

---

१. कवेः कर्मेत्यर्थे गुणवचनब्राह्मणादिभ्यः कर्मणि चेति ष्यञ् (पा॰ सू॰) यस्येति चे तीकारलोपे, तद्धितेष्वचामादेः इत्यादिवृद्धौ काव्यमिति सिद्ध्यति।

२. नाट्यशास्त्रे १७/१२३

३. तत्रैव २१/१३१

इदानीन्तनञ्च मत्कृतं काव्यलक्षणमेवं वर्तते–

काव्यं विशिष्टशब्दार्थौ सहभावसमन्वितौ।[१]
सालङ्कृती गुणरसव्यञ्जकौ चेत् तदुत्तमम्॥

पुरा नवीनकालयोरेतस्मिन् महत्यन्तराले अनेकानि काव्यलक्षणानि काव्यशास्त्रीयाचार्यैः, समालोचकवर्यैः काव्यमर्मज्ञसहृदयैश्च कृतानि येषु मतवैभिन्न्यमपि परस्परं समवलोक्यते।

तत्र समुपलब्धानां काव्यलक्षणानां वर्गीकरणेन अधो निर्दिष्टा विभिन्नाः कोटयो भवन्ति–

(अ) १. अभिव्यक्तिरूपं बाह्यकलापक्षमाधारीकृत्य विहितानि लक्षणानि।

२. अनुभूतिरूपमान्तरभावपक्षमाधारीकृत्य कृतानि लक्षणानि।

(आ) १. काव्यपदप्रवृत्तिनिमित्तं निमित्तीकृत्य कृतानि लक्षणानि।

२. काव्यस्य असाधारणधर्ममाधारीकृत्य विहितानि लक्षणानि।

३. काव्यस्य आत्मतत्त्वमभिलक्ष्य लक्षितानि लेक्षणानि।

(इ) १. काव्यस्य सामान्यरूपमाश्रित्य निर्दिष्टानि लक्षणानि।

२. काव्यस्य विशिष्टरूपमाश्रित्य विहितानि लक्षणानि।

एतासु सप्तविधासु (कोटिषु) वस्तुतस्तिसृष्वे कोटिषु सर्वाणि लक्षणानि संगृहीतानि भवन्ति।

(आ) काव्यं पठ्यते, काव्यं श्रूयते इत्यादिव्यवहारः काव्यशब्द-स्वरूपमेवाभिलक्ष्य प्रवर्तते। भाषायां कस्यामपि ये खलु शब्दाः प्रयुज्यन्ते

---

१. मम काव्यस्वरूपमीमांसायाम् (अप्रकाशितायाम्)

तेषां शब्दानां प्रवृत्तौ अर्थप्रतीतौ किमपि निमित्तं भवति, यस्य प्रवृत्ति-निमित्तस्य आधारेण स शब्दः तत्र प्रयुज्यते। तत्र प्रथमं तावत्

(क) प्रवृत्तिनिमित्तमभिलक्ष्य कृतानि लक्षणानि निर्दिश्यन्ते-

१. संक्षेपाद् वाक्यमिष्टार्थव्यवच्छिन्ना पदावली।

काव्यं स्फुरदलङ्कारं गुणवद्दोषवर्जितम्।।[१]

२. शरीरं तावदिष्टार्थव्यवच्छिन्ना पदावली।[२]

३. निर्दोषा लक्षणवती सरीतिर्गुणभूषणा।

सालङ्काररसानेकवृत्तिर्वाक्काव्यशब्दभाक्।।[३]

४. रमणीयार्थप्रतिपादकः शब्दः काव्यम्।[४]

५. आस्वादजीवातुः पदसन्दर्भः काव्यम्।[५]

६. कवेः शब्दसंयोजनं कर्म काव्यम्

७. वाक्यं रसात्मकं काव्यम्[६]

इत्यादिषु शब्दः, वाक्यं, पदावली वा काव्यम् इत्येतेन अर्थाश्रयस्य शब्दस्यैव काव्यत्वम्।

काव्यस्य असाधारणधर्ममाधारीकृत्य कृतानि लक्षणानि सन्ति-

असाधारण-धर्मो लक्षणमिति अभियुक्तोक्तत्वात् कस्यापि वस्तुनः असाधारणमेव धर्मस्तस्य लक्षणं भवति। असाधारणत्वञ्च धर्मस्य

---

१. अग्निपुराणे, ३३६/६७
२. दण्डिनः काव्यादर्शे १/१०
३. जयदेवस्य चन्द्रालोके १/७
४. जगन्नाथस्य रसगङ्गाधरप्रथमानने।
५. चण्डीदासस्य–काव्यप्रकाशदीपिकायाम्।
६. साहित्यदर्पणे १,१

अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयरहितत्वम्। यथा पृथिव्या गन्धवत्त्वम्। एवञ्च काव्यस्य कश्चासौ असाधारणधर्मो यो न कदापि काव्यं व्यभिचरतीति जिज्ञासायाम् अन्यूनानतिरिक्त-सर्वथासमानरूपशब्दार्थयोः सहभावस्वरूपसाहित्यमेव तादृशो धर्मः समायाति। वेदादिशब्दार्थयोः शब्दस्यैव प्राधान्यात् अर्थस्य गौणतया नास्ति तादृशः सहभावः। पुराणादौ अर्थस्यैव मुख्यतया शब्दस्य चाप्राधान्यात् तत्रापि नास्ति अन्यूनानतिरिक्त-रूपतादृशः सहभावः। काव्ये तु विशिष्टयोः समरूपयोः शब्दार्थयोः साहित्यरूपः सहभावः सर्वत्र विद्यते। तादृशसहभावाभावे काव्यत्वमेव न जायते। अर्थात् काव्यस्य सहितयोः सहभावापन्नयोः विशिष्टयोः शब्दार्थयोर्मध्ये न शब्दः शब्दान्तरेण अर्थो वा अर्थान्तरेण परिवर्तनं सहते। अत एवोच्यते-

**शब्दो विवक्षितार्थैकवाचकोऽन्येषु सत्स्वपि[१]॥ इति**

एतेनैव च शब्दार्थयोर्यथावत् सहभावेन विद्या साहित्यविद्येति[२] यायावरीयराजशेखरस्य कथनं सङ्गच्छते। एवञ्च वाग्व्यवहारे सर्वत्र शब्देन सह अर्थस्य अर्थेन सह शब्दस्य सम्बन्धे सत्यपि शब्दार्थयोर्युक्तत्वेऽपि काव्यशब्दार्थयोरिव सहभावापन्नता नास्तीति तत्र न भवति काव्यत्वव्यवहारः। अतः शब्दार्थौ सहितौ सहभावापन्नौ तयोर्भावः साहित्यमिति व्युत्पत्तिः सङ्गतिं गच्छति। इत्थञ्च **अन्यूनानतिरिक्तरूप-सहभाव एव काव्यस्य असाधारणधर्मः**, तमधिकृत्य कृतं काव्यलक्षणं युक्तमिति मन्वाना मनीषिणो बहुधा काव्यं लक्षयन्ति।

तथा हि

१. **शब्दार्थौ सहितौ काव्यम्[३]** इति भामहः।

---

१. वक्रोक्तिजीविते १, ९।
२. काव्यमीमांसायाम् पृ० ५।
३. भामहालङ्कारे १, १६।

२. काव्य-शब्दोऽयं गुणालङ्कारसंस्कृतयोः शब्दार्थयोर्वतते[१] इति वामनः।

३. ननु शब्दार्थौ काव्यमिति[२] रुद्रटः।

४. शब्दार्थौ च शरीररूपतया काव्यस्येति इन्दुराजः[३]।

५. शब्दार्थौ ते शरीरमिति राजशेखरः[४]।

६. गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ[५] इति प्रथमवाग्भटः।

७. यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ[६] इति आनन्दः,

८. शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवस्थितौ काव्यम्[७] इति कुन्तकः।

९. तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि[८] इति मम्मटः।

१०. अदोषौ सगुणौ सालङ्कारौ च शब्दार्थौ काव्यम्[९] इति हेमचन्द्रः।

११. शब्दार्थौ निर्दोषौ सगुणौ प्रायः सालङ्कारौ काव्यम् इति द्वितीय-वाग्भटः[१०]।

१२. विशिष्टौ शब्दार्थौ काव्यम्[११] इति समुद्रबन्धः।

---

१. काव्यालङ्कारसूत्रवृत्तौ
२. रुद्रटालङ्कारे ३, १।
३. काव्यालङ्कारसारसंग्रहस्य टीकायाम् पृ० ८३
४. काव्यमीमांसायाम्।
५. वाग्भटालङ्कारे।
६. ध्वन्यालोके १, १३। अत्र वा इति चार्थे तेन शब्दार्थौ इति।
७. वक्रोक्तिजीवते।
८. काव्यप्रकाशे, १, ४।
९. काव्यानुशासने पृ० १६।
१०. काव्यानुशासने
११. अलङ्कारसर्वस्वटीकायाम्।

१३. परस्परोपकारकरुचिरशब्दार्थरूपस्य काव्य स्येति[१] क्षेमेन्द्रः।

१४. गुणालङ्कारसहितौ शब्दार्थौ दोषवर्जितौ। काव्यम्[२] इति विद्यानाथः।

१५. शरीरं शब्दार्थौ ध्वनिरसव आत्मा किल रसः[३] इति कविकर्णपूरः।

१६. तत्र निर्दोषशब्दार्थगुणवत्त्वे सति स्फुटम्।
गद्यादिबन्धरूपत्वं काव्यसामान्य लक्षणम्''[४]।। इति अच्युतरायः।

१७. सगुणालङ्कृती काव्यं पदार्थौ दोषवर्जितौ[५] इति धर्मसूरिः।

१८. गुणालङ्कारसंयुक्तौ शब्दार्थौ रसभावगौ।
नित्यं दोषविनिर्मुक्तौ काव्यमित्यभिधीयते[६]।। इति न्यायवागीशः।

१९. काव्यं विशिष्टशब्दार्थौ सहभावसमन्वितौ।
सालङ्कृती गुणरसव्यञ्जकौ चेत् तदुत्तमम्[७]म्
इत्याचार्य- जयमन्तमिश्रः।

इत्थं हि सहभावसमन्वितविशिष्टशब्दार्थयोः काव्यत्वमिति-मन्यमाना बहवो मनीषिणो दरीदृश्यन्ते।

महाकविष्वपि- वागर्थाविव सम्पृक्तौ[८] इति कालिदासः

---

१. औचित्यविचारचर्चायाम्।
२. प्रतापरुद्रयशोभूषणे।
३. अलङ्कारकौस्तुभे।
४. साहित्यसारे।
५. द्र० सारस्वतकुसुमाञ्जलिः पृ० २५६
६. तत्रैव पृ० २५७
७. काव्यस्वरूपमीमांसायाम्।
८. रघुवंशे १, १।

**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते** इति माघः,[1]
**वागर्थवत्यः कविताः समस्ताः** इति विद्यापतिः,[2]

(ग) काव्यात्मपरककाव्यलक्षणे विश्वनाथकविराजस्य रसात्मकं काव्यमिति लक्षणं रस आत्मा यस्य तत् वाक्यं काव्यमिति रसस्य आत्मत्वं बोधयत् काव्यलक्षणं यथा विद्यते, तथा रीतिरात्मा काव्यस्य, काव्यस्यात्मा रसः, काव्यस्यात्मा ध्वनिः इत्यादीनि काव्यात्मत्वबोधकानि वाक्यानि काव्यलक्षणानि न सन्ति वामनराजशेखरानन्दवर्धनादीनाम्। एतैरपि काव्य-लक्षणानि पृथगेव कृतानीति द्रष्टव्यम्।

विश्वनाथकविराजस्यापि उपर्युक्तलक्षणे वाक्यस्यैव विशेष्यत्वात् प्रथमकोटिकलक्षणेष्वेव तदप्यापतति।

तत्र शब्दः, शब्दार्थौ वा काव्यमिति काव्यलक्षणमेव अधिकृत्य उदीचां दाक्षिणत्यानां मध्ये मुख्यतो वाग्युद्धं प्रवृत्तम् इत्यवधेयम्।

## मम्मटकाव्यलक्षणे गुणदोषविमर्शः

शब्दार्थौकाव्यमिति पक्षे ध्वनिप्रस्थापनपरमाचार्यमम्मटस्य **तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि** इति सर्वातिशायि विलक्षणं काव्य-लक्षणमिति पक्षपातरहिता गुणदोषविवेचका विवेकिनो विपश्चितो मन्यमाना मम्मटमतानुसारं तल्लक्षणं व्याचक्षते, येन विश्वनाथकविराजपण्डितराजजगन्नाथयोः स्वमतस्थापनग्रहैकमूलं खण्डनं निर्मूलं भवति। तथाहि-

१. उपर्युक्तमम्मटलक्षणे शब्दार्थौ तदिति विधेयवाक्यं विशेष्यमस्ति। तत्र तत् पदेन काव्यं यशसेऽर्थकृते इत्यत्र निर्दिष्टं काव्यं परामृश्यते, तेन शब्दार्थौ काव्यमिति फलति।

२. अदोषौ, सगुणौ, पुनः क्वाप्यनङ्कृती इत्येतानि त्रीणि उद्देश्य-कोटिकविशेषणपदानि सन्ति।

---

१. शिशुपालवधे २, ८८
२. पुरुषपरीक्षायाम्।

३. शब्दार्थौ इत्यत्र शब्दश्च अर्थश्चेति द्वन्द्वे शब्दस्यार्थाश्रयत्वात् नामरूपे व्याकरवाणि, वागर्थाविव संपृक्तौ इत्यादिवत् अजाद्यदन्तम्[1] इति पाणिनिनियमेन पूर्वप्रयोगार्हस्य अर्थस्य स्थाने शब्दस्यैव पूर्वप्रयोगः।

(क) लक्ष्यतावच्छेदकस्य आस्वादाभिव्यञ्जकत्वस्य शब्दे अर्थे च उभयत्र वृत्तित्वात्,

(ख) काव्यं पठितं श्रुतं गीतं रचितम्, काव्यं बुद्धम् इत्युभयविधव्यवहारेद्दर्शनाच्च शब्दर्थयुगलमेव काव्यम्। शब्दश्चार्थश्चेतीतरेतरद्वन्द्वसमासेन शब्दार्थयोः परस्परसहभावेन उभयोः समं प्राधान्यं, द्वन्द्वस्योभय- पदार्थप्रधानत्वात्। एतेन सहभावापन्नौ शब्दार्थौ काव्यमिति पर्यवस्यति।

एवं वस्तुस्थितावपि रमणीयार्थप्रतिपादकः शब्दः काव्यमिति काव्यलक्षणं कुर्वाणेन पण्डितराजजगन्नाथेन मम्मटोक्तकाव्यलक्षणमाक्षिपता उक्तं यत्तु **प्राञ्चः शब्दार्थौ काव्यमित्याहुस्तत्र विचार्यते। किं काव्यपदप्रवृत्तिनिमित्तं पर्याप्ताख्यविलक्षणसम्बन्धरूपया व्यासज्य वृत्त्याशब्दार्थयो र्व्यासक्तम्, अथवा प्रत्येकं शब्दे अर्थे च पर्याप्तम्। व्यासज्यवृत्त्या स्वीकारे श्लोकवाक्यं न काव्यमिति व्यवहारापत्तिः। द्वितीयपक्षे तु एकस्मिन्नेव पद्ये शब्दात्मकतया अर्थात्मकतया च काव्यद्वयस्य व्यवहारापत्तिः। तस्माद्वेदशास्त्रपुराणलक्षणस्येव काव्यलक्षणस्यापि शब्दनिष्ठतैव युक्तेति।**

मम्मटोक्तलक्षणे अपरञ्च आक्षेपं विदधानेन पण्डितराजेन उक्तम्, काव्यत्वप्रयोजकम् आस्वादाभिव्यञ्जकत्वं स्वीकृत्य तस्य शब्दे अर्थे उभयत्र सत्त्वात् शब्दार्थयोः काव्यत्वं यदि मन्येत तर्हि तादृशास्वादव्यञ्जकत्वस्य रागादावपि विद्यमानत्वात् रागतालादौ काव्यत्वापत्तिः स्यादिति। वस्तुतो निष्पक्षविचारेण एतदाक्षेपद्वयमपि अकिञ्चित्करम्–.

---

१. पाणिनिसूत्रम् २, २, ३३।

१. काव्यपदप्रवृत्तिनिमित्तस्य व्यासज्यवृत्त्या शब्दार्थयोः स्वीकारेऽपि श्लोकवाक्ये लक्षणया काव्यत्वेन नात्र व्यवहारे काचिदापत्तिः। वेदत्वव्यवहारः वेदस्य शब्दे इव तदर्थेऽपि भवत्येवेति **तदधीते तद्वेद**[1] इति सूत्रमहाभाष्ये भगवता पतञ्जलिना स्पष्टं प्रतिपादितम्। पुराणश्रोता पुराणं शृण्वन् तदर्थं जानान एव पुराणश्रवणजन्यफलं लभते। अतो वेदपुराणादयः शब्दार्थोभयविषयका इति नास्ति कुत्रापि व्यवहारे व्याकुलता।

२. कविकर्मरूपयोः शब्दार्थयोः यत् काव्यत्वप्रयोजकम् आस्वाद-व्यञ्जकत्वं वरीवर्ति तन्नास्ति रागलास्यादौ, रागादेः कविकर्तृत्वा-भावात्। अतः केवले शब्दे कवि संरम्भगोचरत्वायोगात् लोकोत्तर-वर्णनानिपुणकविकर्मतायाः उभयत्राप्यविशेषात्, कव्युच्चारणकर्मत्वस्य शब्दे, कविसमवेतरसबोधौपयिक सामग्रीसङ्घटनविषयकज्ञानकर्म-त्वस्य अर्थे च सत्वात् शब्दार्थयोः सहितयोरेव निर्बाधं काव्यत्वं भवति।

अत्रार्थपदेन वाच्यलक्ष्यव्यङ्ग्यात्मनस्त्रिविधस्याप्यर्थस्य ग्रहणं भवति। तत्र

**अर्थस्य व्यञ्जकत्वे तु शब्दस्य सहकारिता।**
**अर्थोऽपि व्यञ्जकस्तत्र सहकारितया मतः**[2]॥

इत्युक्तत्वात् शब्दार्थयोरुभयोः सर्वत्र परस्परसहकारित्वं भवतीत्यव-गन्तव्यम्।

शब्दार्थयोः काव्यत्वादेव काव्ये शब्ददोषगुणालङ्काराणामिव अर्थदोष-गुणालङ्काराणामपि तत्र पृथक्त्वेन निरूपणं सङ्गच्छते। शब्दमात्रस्य

---

१. पाणिनिसूत्रम् ४, २, ५९।
२. काव्यप्रकाशे ३, २३, २, २०।

काव्यत्वे तु अर्थदोषगुणादीनां काव्ये प्रतिपादनमेवासङ्गतं भवेत्।

अपरञ्च शब्दनित्यत्ववादिनां वैयाकरणादीनां मते यथा शब्द-रूपेऽपि काव्ये कविकर्मत्वव्यवहास्य वस्तुतो लाक्षणिकत्वमेव तथैव शब्दार्थयोः काव्यत्वे श्लोकवाक्ये काव्यत्वव्यवहारस्य भाक्तत्वम्। अतः शब्दार्थौ काव्यमित्येव सर्वथा सङ्गतम्।

आचार्यमम्मटस्य **शब्दार्थौ काव्यम्** इत्यत्र यानि अदोषौ, सगुणौ, पुनः काप्यनलङ्कृती इति त्रीणि विशेषणानि सन्ति तानि **सम्भव व्यभिचाराभ्यां स्याद् विशेषणमर्थवत्** इत्यनुसारेण सर्वाणि अर्थवन्ति सन्ति। तथाहि-

(क) अदोषौ-अविद्यमानः दोषः ययोः तौ अदोषो। नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः[१] इति वार्तिकेन बहुव्रीहिसमासे विद्यमतानोत्तरपदस्य च लोपे अदोषौ इति। अविद्यान इत्यत्र न विद्यमानः इति विग्रहे नञा सह सुबन्तविद्यमानस्य नञ्[२] तत्पुरुषसमासे **नलोपो नञः**[३] इति नञो नस्य लोपे अविद्यमानः इति सिद्ध्यति। एवञ्च अदोषौ इत्यत्र न दोषौ अदोषौ इति नञ्तत्पुरुषसमासभ्रमो न कार्यः, तथात्वे शब्दार्थौ इत्यस्य विशेषणत्वायोगात्।

प्रकृते दोषत्वं नाम मुख्यरसाद्यपकर्षकत्वम्।[४] अर्थात् उद्देश्यप्रतीति-विघातकत्वमेव दोषत्वम्। तेन यत्र विधेयाविमर्शादिदोषे सत्त्वेऽपि उद्देश्य-ध्वन्यर्थप्रतीतौ विघातो न जायते तत्र काव्यत्वसत्त्वात् नाव्याप्तिः। अयं हि दोषो नित्योऽनित्यश्चेति द्विविधः। च्युतसंस्कादयो नित्यदोषाः। अप्रयुक्त-त्वश्रुतिकटुत्वादयः अनित्यदोषाः। एतेनैव

---

१. अनेकमन्यपदार्थे २, २, २४ सूत्रस्थं वार्तिकम्।

२. पा० सू० २, २, ६।

३. पा० सू० ६, ३, ७३।

४. मुख्यार्थहतिर्दोषो रसश्च मुख्यस्तदाश्रयाद् वाच्यः।
उभयोपयोगिनः स्युः शब्दाद्यास्तेन तेष्वपि सः।। काव्यप्रकाशे सू० ६१।

**वक्त्राद्यौचित्यवशाद् दोषोऽपि गुणः क्वचित्।[१]**
**कीटानुविद्धरत्नादिसाधारण्येन काव्यता।**
**दुष्टेष्वपि मता यत्र रसाद्यनुगमःस्फुटः।।**

इत्याद्युक्तत्वात्-

**न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः**
**सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।**
**रिधिग्धिक्! शक्रजितं प्रबोधितवता किं कुम्भकर्णे वा**
**स्वर्गग्रामकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः[२]।।**

इत्यादौ विधेयाविमर्शदोषसद्भावेऽपि ध्वन्यर्थप्रतीतौ प्रतिबन्धकत्वाभावेन उत्तमकाव्यत्वे न कदापि विप्रतिपत्तिः।

एवं वस्तु स्थितावपि यथोक्तस्य काव्यलक्षणत्वे **काव्यपदं निर्विषयं प्रविरलविषयं वा स्यात् दोषाणां दुर्निवारत्वादित्येवं** मम्मटोक्तकाव्यलक्षणे दण्डं प्रहरतो विश्वनाथस्येदमुद्दण्डत्वमिति कथयन्ति विवेकिनः।

(ख) निर्गुणे अतिव्याप्तिवारणाय सगुणौ इति विशेषणम् गुणेन सहितौ तुल्ययोगे युगपत्कालिकक्रियायां स्थितौ इत्यर्थे सह इत्येतेन तृतीयान्तगुणपदस्य **तेन सहेति तुल्योगे[३]** इति सूत्रेण बहुव्रीहिसमासे कृते **वोपसर्जनस्य[४]** इति सहस्य सादेशे सगुणौ इति सिद्ध्यति। रसाभिव्यञ्जनक्रियायां गुणेन सह गुणवृत्त्या शब्दार्थयोस्तुल्ययोगस्य सत्त्वात् गुणेन सह सगुणौ इति पूर्वोक्तबहुव्रीहिसमासेन अभिप्रेतार्थः प्रतीयते।

**सहैव दशभिः पुत्रैर्भारं वहति गर्दभीत्यत्र** भारकर्मकवहनक्रियायां पुत्राणामनन्वयात् सहस्य तुल्ययोगवचनत्वं नास्ति, अपि तु विद्यमानत्वमेवेत्यतः सगुणौ पदघटकसहशब्दस्य तुल्ययोगवचनस्य वैलक्षण्यम्।

---

१. तत्रैव सू० ८१।
२. तत्रैव उदाहरणम् १८३।
३. पा० सू० २. २. २८।
४. पा० सू० ६. ३. ८२।

माधुर्यौजः प्रसादाख्या ये गुणाः तेषां रसैकनिष्ठत्वेऽपि परम्परया तदभिव्यञ्जकशब्दार्थनिष्ठत्वं भवतीति–मम्मटेन गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता[1] इत्येतेन स्पष्टं प्रतिपादतम्।

एवं हि **शब्दार्थौ** इत्यस्य सगुणौ इति विशेषणमप्यनुपपन्नं, गुणानां रसैकधर्मत्वात् इत्यपि विश्वनाथस्य कथनं मम्मटाचार्यतात्पर्यानभिज्ञत्वं सूचयति। **ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः**[2] इति जानान एव आचार्यमम्मटो गुणवृत्त्या अर्थात् गुणाभिव्यञ्जकत्वसम्बन्धेन शब्दार्थयोस्त-न्निष्ठत्वं प्रत्यपादयत्।

(ग) नीरसे स्फुटालङ्कारविरहे अतिव्याप्तिवारणाय अनलङ्कृती पुनः क्वापीति विशेषणंम् तत्र न अलङ्कृतिः ययोः तौ अनलङ्कृती इति शब्दार्थौ इत्यस्य विशेषणम्। शब्दार्थरूपान्यपदार्थे विद्यमानं नञो न इति अलङ्कृतिश्चेति, अनेकं प्रथमान्तम् **अनेकमन्यपदार्थे** इति सूत्रेण समस्यते। अतः समासोऽयं बहवीहिः। ततो **नलोपो नञः** इत्यनेन नञो नकारस्य लोपे, तस्मान्नुडचि इत्यनेन लुप्तनकारात् नञः उत्तरपदस्याजादेः नुडागमे अनलङ्कृति शब्दस्य द्विवचने अनलङ्कृती इति। अत्र तत्पुरुषाधिकारे पठितेन नञ् सूत्रेण तत्पुरुषसमासाभावेऽपि। तत्पुरुषधिकाराद् बहिर्भूतेन **नलोपो नञः** इति सूत्रेण नलोपस्य तस्मान्नुडचि इत्यनेन च नुटो विधाने न काचिदनुपपत्तिः। अस्य च स्वयं मम्मटः क्वापीत्यनेन सर्वत्र सालङ्कारौ क्वचित्तु स्फुटालङ्कारविरहेऽपि न काव्यत्व- हानिरित्यर्थं स्फुटयति। प्रकृते।

**तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता।**
**अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिताः॥**

इति षड्विधेषु नञर्थेषु नञः अल्पार्थकतया अस्फुटत्वरूपोऽर्थः पर्यवस्यति।

---

१. काव्य प्र० सू० ९५।
२. तत्रैव सू० ८७।

क्वचिदित्यस्य रसादिस्थले इत्यर्थः। तेन रसादिस्थले स्फुटालङ्काराभावेऽपि काव्यत्वं भवतीति तात्पर्यम्। यथा-

**यः कौमारहरः स एवहि वरस्ता एव चैत्रक्षपाः**
**स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।**
**सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ**
**रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते।।**[1]

अत्र विप्रलम्भशृङ्गारप्रधानस्थले झटिति प्रतीयमानरूपः कश्चिदपि स्फुटालङ्कारो नास्ति, तथापि काव्यत्वमस्त्येव। तथाहि-

वरोपकरणादीनां सत्त्वेन अनुपभुक्तत्वस्य कारणस्य अभावेऽपि उत्काण्ठारूपस्य कार्यस्य कथनाद् विभावनालङ्कारः, एवम् उपंभुक्तत्वरूपकारणसत्त्वेऽपि अनुत्कण्ठारूपस्य तत्कार्यस्याभावकथनाद् विशेषोक्त्यलङ्कारश्च स्फुटौ न स्तः, कार्यकारणयोरभावकथनस्य आर्थिकस्य सत्त्वेऽपि तद्वाचकनञादिनानुपात्तत्वात्। एतयोरस्फुटत्वेन तन्मूलकसन्देहसङ्करोऽप्यस्फुट एव। एवमेव क्रियादीपकपरिसंख्या समुच्चयतुल्ययोगितास्मरणकाव्यलिङ्गादयोऽप्यलङ्कारा अस्फुटा एव। विप्रलम्भशृङ्गारस्य प्राधान्याद् रसवदलङ्कारोऽपि न सम्भाव्यते, प्रधानवाच्यार्थस्य अङ्गत्वे एव रसवदादेरलङ्कारत्वात्। अतो न कोऽप्यलङ्कारोऽत्र स्फुट इति निष्कर्षः।

एवञ्च अनलङ्कृती पुनः क्वापि इत्यस्य असाङ्गत्ये विश्वनाथ कविराजेन निर्दिष्टा हेतवः स्वमतस्थापनाग्रहैकमूला उपर्युक्तकारणैः सर्वथा असङ्गता एव।

यदि नाम तस्यानुसारेण रसात्मकं वाक्यमेव काव्यं स्यात् तर्हि दृश्य-**श्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम्**[2] इति तस्य वदतो व्याघातापत्तिर्भवेत्। एवञ्च मम्मटोक्तकाव्यलक्षणमेव सर्वातिशायि इति कथयन्ति मनीषिणः।

---

१. साहित्यदर्पणे ६, १।
२. तत्रैव प्रथमोल्लासे।

## काव्यशास्त्रम्

(क) विशिष्टशब्दार्थयुगलकाव्यं येन शास्यते तच्छास्त्रं काव्यशास्त्रम्। विधिनिषेधयोर्व्यावहारिकं ज्ञानं येन समवाप्यते तदेव शास्त्रं तच्चाध्येयं भवतीति सूचयन् प्राह भेजराजः-

**यद् विधौ च निषेधे च व्युत्पत्तेरेव कारणम्।**
**तदध्येयं विदुस्तेन लोकयात्रा प्रवर्तते''**

तच्च-

**काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्[1]॥**

इतिरीत्या १. काव्यम्, २. शास्त्रम्, ३. इतिहासः, ४. काव्य-शास्त्रम्, ५. काव्येतिहासः, ६. शास्त्रेतिहासश्चेति षड्विधम्। एवञ्च काव्यविषयकविधिनिषेधशासनात्मकं भामहानन्दवर्धनमम्मटादिभिः प्रणीतं शास्त्रं काव्यशास्त्रम् इति व्यपदिश्यते।

## अलङ्कारशास्त्रम्

काव्यशास्त्रस्य कृते अलङ्कारशास्त्रमिति नामप्रचलने बीजं निर्दिशता अलङ्कारसर्वस्वकृता रुय्यकेण प्रतिपादितम्-

इह हि तावद् भामहोद्भटप्रभृतयश्चिरन्तनालङ्कारकाराः प्रतीयमानमर्थं वाच्योपस्कारकतयालङ्कारपक्षनिक्षिप्तं मन्यन्ते[2]। अलङ्कारा एव काव्ये प्रधानमिति तेषां सिद्धान्तव्ये **प्राधान्येन व्यपदेशा भवन्तीति** नयात् काव्यशास्त्रस्य अलङ्कारशास्त्रमिति व्यपदेशः प्रचलितोऽभवत्। अतोऽलङ्काराणामिव गुणदोषरसादीनामपि शासनमेतदन्तर्गततयैव एतत् सम्प्रदायाचार्यैः कृतम्।

---

१. सरस्वतीकण्ठाभरणे २, १३८, १३९।
२. अलङ्कारसर्वस्वे पृ० ३।

## साहित्यशास्त्रम्-

काव्यशास्त्रस्यैव कृते साहित्यशास्त्रमिति अपरं नाम प्रथिमानमधात्। एतद् बीजन्तु इत्थं प्रतिपाद्यते-

सत्कविभिः सम्यक् आधीयेते (धार्येते पोष्येते च) इत्यर्थे सम्पूर्वकाद् दधातेः कर्मणिक्तप्रत्यये **दधातेर्हिः** इति ह्यादेशे **समो वा हित ततयोः** इति वार्तिकेन समो मकारस्य लोपे प्रथमाद्विवचने सहितौ शब्दार्थौ इति। एतयोः सहितयोर्भावः सहित्यम् इति। यच्च-

**साहित्यमनयोः शोभाशालितां प्रति काप्यसौ।**
**अन्यूनानतिरिक्तत्वनोहरिण्यवस्थितिः1।** [1]इति

शब्दार्थयोः सर्वथा समानसहभावरूपं समपेक्षितं भवति। एतस्यैव कृते राजशेखरेण **शब्दार्थयोर्यथावत् सहभावेन विद्या- पञ्चमी साहित्यविद्येति**[2] प्रतिपाद्यते। एवञ्च एतादृशविशिष्टसहभावरूप-साहित्येनैव काव्ये काव्यत्वस्वीकारात् काव्यशास्त्रमपि स्वकीयं साहित्यशास्त्रमिति अन्वर्थं नाम अङ्गीचकार।

(घ) **क्रियाविधिः/क्रियाकल्पः** इति

काव्यशास्त्रस्यैवार्थे क्रियाविधिःक्रियाकल्प इतिः शब्दद्वयं प्राचीनकाले प्रयुक्तमासीत्।

आचार्यदण्डिनः काव्यादर्शे-

**वाचां विचित्रमार्गाणां निबबन्धुः क्रियाविधिम्**[3] इत्यत्र क्रियाविधि- शब्देन काव्यक्रियायाः विधिः विधानम् अर्थात् काव्यक्रिया-प्रतिपादकंकाव्यशास्त्रमेव अभिप्रेतं वर्तते।

---

१. वक्रोक्तिजीविते १, १०। तत्रैव
समसर्वगुणौ सन्तौ सुहृदाविव सङ्गतौ।
परस्परस्य शोभायै शब्दार्थौ भवतो यथा।।१, ९।
२. काव्यमी० पृ० ४।
३. काव्यादर्शे १, ९।

वाल्मीकिरामायणे वैयाकरणनैगमस्वरज्ञकाव्यज्ञादिभिः सह प्रयुक्तः **क्रियाकल्पवित्** इति शब्दः काव्यशास्त्रज्ञमेव अभिप्रैति। तथाहि- **क्रियाकल्पविदश्चैव तथा काव्यविदो जनान्**[1]।

वात्स्यायनस्य कामशास्त्रे परिगणितासु चतुष्षष्ठिकलासु निर्दिष्टा क्रियाकल्पकला काव्यशास्त्रमेव बोधयति। जयमङ्गलाचार्यः एवट्टीकायां

**क्रियाकल्प इति काव्यकरणविधिः काव्यालङ्कार इत्यर्थः इत्येवं व्याचख्यौ।**

महाकविकालिदासोऽपि काव्यक्रियार्थे क्रियाशब्दं प्रयुज्य प्रकृतार्थं समर्थयति स्मा **प्रथितयशसां भाससौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्तमानकवेः कालिदासस्य क्रियायां बहुमानः** इति[2]।

इत्थञ्च (१) क्रियाकल्पः, (२) क्रियाविधिः, (३) काव्यालङ्कारः, (४) अलङ्कारशास्त्रम्, (५) काव्यशास्त्रम्, (६) साहित्यशास्त्रम् इत्यादिभिः विविधैर्नामभिः काव्यशास्त्रं व्यवह्रियमाणमुपलभ्यते। एतेषु अन्तिमानि त्रीणि अतीव प्रसिद्धानि सन्ति।

## काव्य-सम्प्रदायसमुद्भवरहस्यम्

काव्ये परमसारतया कम्यं चमत्कारविच्छित्तिसौन्दर्यादिशब्दव्यपदेश्यं यत् तत्त्वमस्ति तदेवाभिलक्ष्य तत् सम्पादकं यदसाधारणं वस्तु काव्य-शास्त्राचार्येण स्वमतानुसारं परिकल्पितं तदेव काव्यस्य आत्मरूपम् आत्म-स्थानीयं वा निश्चित्य तदाधारेण स्वस्वसम्प्रदायस्तेन प्रतिष्ठापितः। कालक्रमेण स्वबुद्धिवैशद्यप्रभावात् रुचीनां वैचित्र्याच्च विभिन्नैराचार्यैः विभिन्नाःषट् सम्प्रदायाः संस्थापयाञ्चक्रिरे।

एतत्सम्प्रदाय समुत्पत्तौ समुद्रबन्धेन अलङ्कारसर्वस्वव्याख्यायां यत् प्रतिपादितं तेन किमपि रहस्यं समुद्घाटितं भवति- तथाहि-

---

१. वाल्मीकि रा० उत्तरकाण्डे ९४, ७।
२. मालविकाग्निमित्रप्रस्तावनायाम्।

**इह विशिष्टौ शब्दार्थौ काव्यम्। तयोश्च वैशिष्ट्यं धर्ममुखेन व्यापार- मुखेन व्यङ्ग्यमुखेन चेति त्रयः पक्षाः। आद्येऽप्यलङ्कारतो गुणतो वेति द्वैविध्यम्। द्वितीयेऽपि भणितिवैचित्र्येण भोगकृत्त्वेन वेति द्वैविध्यम् इति पञ्चसु पक्षेषु आद्य उद्भटादिभिरङ्गीकृतः, द्वितीयो वामनेन, तृतीयो वक्रोक्तिजीवितकारेण, चतुर्थो भट्टनायकेन, पञ्चम आनन्दवर्धनेन[१]।**

समुद्रबन्धस्य एतद्वाक्यनिबन्धने शब्दार्थयोः वैशिष्ट्येनैव तन्मूलकानि प्रस्थानानि अभवन्निति कथनं सर्वथा समीचीनम्। किन्तु धर्मात्मके व्यङ्ग्यात्मके वा वैशिष्ट्ये स्पष्टतो रसस्य अनुल्लेखात् प्राथम्येन प्राधान्येन च व्यवह्रियमाणस्य रससम्प्रदायस्य परिग्रहो न भवति। एवमेव आनन्दवर्धनादिभिः प्रकटितमहिम्न औचित्यस्य च अनिर्देशात् रसनिष्पत्तौ कारणरूपेषु अन्यतमभोजकत्वमूलकव्यापारमात्रस्य च निर्देशात् प्रतीयते यत् तेन उपरिनिर्दिष्टपक्षत्रये एव रसौचित्ययोरपि संग्रहात् तयोर्नामग्राहं सङ्कीर्तनं न कृतम् इति।

एवञ्च विशिष्टशब्दार्थरूपकाव्ये प्राधान्येन यद् वस्तु येन विच्छित्ति-जनकतया निश्चितं तन्मूलकं तेन स्वप्रस्थानं प्रवर्तितम्।

इत्थञ्च-

१. भरतमुनिमते रसस्य प्राधान्यात् रससम्प्रदायः।
२. भामहादिमते अलङ्कारस्य मुख्यत्वादलङ्कारसम्प्रदायः
३. वामनमते रीतेरात्मत्वात् रीतिसम्प्रदायः।
४. आनन्दवर्धन मते ध्वनेरात्मत्वाद् ध्वनिसम्प्रदायः।
५. कुन्तकमते वक्रोक्तेः काव्यजीवितत्वाद् वक्रोक्तिसम्प्रदायः।
६. क्षेमेन्द्रमते च औचित्यस्य चमत्कारमूलनिदानत्वात् औचित्य सम्प्रदायश्च प्रावर्तन्त।

**एतेषां सम्प्रदायानां काव्य-चारुत्वशालिनाम्।**
**विच्छित्ति-जनकत्वं तत् क्रमशः प्रतिपाद्यते।।**

## काव्यप्रयोजनम्

मानवो जगति यत् किमपि कार्यं विदधाति तस्य किमपि प्रयोजन-मुद्दिश्यैव स तदारभते। अत एवोच्यते—

**प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते इति।** एवं सति यो हि कविर्मनीषी महता प्रतिभा-नैपुण्याभ्यासेन विशिष्ट-शब्दार्थसहभावशलि-काव्यंसृजति तस्यावश्यमेव केनापि विशिष्टेन प्रयोजनेन भवितव्यम्। अतो भारतीयशास्त्रकाराः काव्यकाराश्च ग्रन्थारम्भे विषय-सम्बन्धप्रयोजनाधिकारिरूपमनुबन्धचतुष्टयं नियमेन निर्दिशन्ति अत एवाभियुक्तैरुच्यते-

**सर्वस्यैव हि शास्त्रस्य कर्मणो वापि कस्यचित्।**
**यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते।। इति**

नाट्य-काव्य-शास्त्रयोराचार्यैः कवीनां काव्यास्वाद-रसिकानाञ्च अभीष्टप्रयोजनमभिलक्ष्य प्रयोजन-प्रतिपादनं नियमेन विहितं, यच्च अधोलिखितैर्निर्दिष्टैः प्रयोजनैरवगम्यते- तत्र

१. भरतमुनिः नाट्यस्य दुःखश्रमशोकार्तजनदुःखप्रशमनं, धर्मः, यशः, नैरुज्यं, मङ्गलं, विशिष्टज्ञानं लोकोपदेशः वेदविद्येतिहासादीनां परिज्ञानम्, आनन्दश्चेति ऐहलौकिकानि पारलौकिकानि च प्रयोजनानि प्रतिपादयामास।[1]

२. भामहाचार्यः सात्काव्य-निबन्धनेन सुकविः, तत्परिशीलनेन सहृदयश्च-

**धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।**
**करोति कीर्तिं प्रीतिञ्च साधुकाव्यनिबन्धनम्।।**[2]

---

१. दुःखार्तानां श्रमार्तानां शोकार्तानां तपस्विनाम्।
विश्रामजननं लोके नाट्यमेतद् भविष्यति।।
धर्म्यं यशस्यमायुष्यं हितं बुद्धि-विवर्धनम्।
लोकोपदेशजननं नाट्यमेतद् भविष्यति।।
वेद-विद्येतिहासानामाख्यान-परिकल्पनम्।
विनोद-जननं काले नाट्यमेतद् भविष्यति।।
नाट्यशास्त्रे १/१११-१२, ११६

२. काव्यालङ्कारे प्रथमपरिच्छेदे, साधुकाव्य-निषेवणमित्यपि पाठः।

धर्मार्थकाममोक्षेषु कलासु च वैचक्षण्यम्, लोके कीर्तिम्, सद्यः प्रीतिञ्च लभते इति प्राह।

३. आचार्यदण्डिमते काव्यं चतुर्वर्गफलायत्तं भवतीति काव्यस्य धर्मार्थकाममोक्षाः इति चत्वारि प्रयोजनानि[१] सन्ति।

४. उद्भटाचार्यस्य मते गुणालङ्कार-सौन्दर्य-समन्वितं काव्यं कल्पतरूपमं सर्वाणि अभीष्टफलानि ददाति।[२]

५. काव्यं सद् दृष्टादृष्टार्थं प्रीति-कीर्ति हेतुत्वात्[३] इत्येवं निरूपयन् वामनाचार्यः काव्यस्य प्रीतिरूपं दृष्टं प्रयोजनं, कीर्तिरुपञ्च अदृष्टप्रयोजनं मन्यते सत्काव्य-रचनेन सुकविः परमानन्दमासादयन् यशः सोपानमारुह्य स्वर्गं प्राप्नोति; किन्तु कुकवित्वविडम्बनया असत्काव्य-निबन्धनेन कुकविः निरालोकं नरकं गच्छति। काव्यरचना-प्रसङ्गे कविना अकरणान् मन्दकरणं श्रेयः इति न्यायो नासरणीय इति यद् भामहेन–

**नाकवित्वमधर्माय व्याधये दण्डनाय वा।**
**कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः[४]॥ इति**

पूर्वं निर्दिष्टं तस्यानुसरणं विदधद्वामनाचार्योऽपि कुकवित्वविडम्बनां नरकोद्देशदूतिकामाह।

---

१. गुणालङ्कारचारुत्वयुक्तमप्यधिकोज्ज्वलम्।
काव्यमाश्रयसम्पत्त्या मेरुणेवामरद्रुमः॥

२. काव्यालङ्कारसूत्रवृत्तौ १, १, ५। (काव्यालङ्कारसारसङ्ग्रहे)

३. प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः।
अकीर्तिवर्तिनीं त्वेवं कुकुवित्वविडम्बनाम्॥
कीर्तिं स्वर्गफलामाहुरासंसारं विपश्चितः।
अकीर्तिं तु निरालोकनरकोद्देश-दूतिकाम्॥
तस्मात् कीर्तिमुपादातुमकीर्तिञ्च व्यपोहितुम्।
काव्यालङ्कारशास्त्रार्थः प्रसाद्यः कविपुङ्गवैः ॥ तत्रैव।

४. भामहालङ्कारप्रथमपरिच्छेदः।

६. आचार्यरुद्रटमतानुसारं सुकविः सत्काव्य-निबन्धनेन धनं, विपन्नाशं, रोग-विमुक्तिं, धर्मादिचतुर्वर्गं, कल्पान्त स्थायि यशः, परमाह्लादम् एवंविधं सर्वमभिलषितं च लभते।[1]

७. आचार्यकुन्तकानुसारं काव्यं सुमतीनां सुकुमारमतीनाञ्च कृते मृदुमार्गेण हृदयाह्लादनस्य, धर्मादिचतुर्वगस्य च अद्वितीयं साधनं विद्यते। सत्काव्यं लौकिकव्यवहारज्ञानं जनयति, सहृदयानामलौकिका-मृतरसेन अन्तश्चमत्कारञ्च कुरुते।[2]

यद्यपि कटुकौषधवत् शास्त्रमपि अविद्याव्याधिं विनाशयति, किन्तु आह्लादकम् अमृतायमानं काव्यं यथा अविवेकगदं निवारयति न तथा किमप्यन्यदिति विशिष्टप्रयोजनकं काव्यम् अतिशेते।[3] एवं हि कुन्तका-चार्यमते समाहारेण काव्यस्य (१) चतुर्वर्गफलाधिगमनम्, (२) व्यवहारौ

---

१. अर्थमनर्थोपशमं शम-सममथवा मतं यदेवास्य।
विरचित-रुचिरसुरस्तुतिरखिलं लभते तदेव कविः।।
नुत्वा तथाहि दुर्गां केचित्तीर्णा दुरुत्तरां विपदम्।
अपरे रोगविमुक्तिं वरमन्ये लेभिरेऽभिमतम्।।
स्फारस्फुरदुरुमहिमा हिमधवलं सकललोक कमनीयम्।
कल्पान्तस्थायियशः प्राप्नोति महाकविःकाव्यात्।।
रुद्रटालङ्कारे १, ८, ९-११,
कुर्वीत काव्यमविनाशि यशोऽधिगन्तुम्। तत्रैव ११, ३६।
ननु काव्येन क्रियते सरसानामवगमश्चतुर्वर्गे
लघु मृदु च नीरसेभ्यस्तेहि त्रस्यन्ति शास्त्रेभ्यः।।
तत्रैव १२, ९।

२. धर्मादिधनोपायः सुकुमारक्रमोदितः।
काव्यबन्धोऽभिजातानां हृदयाह्लाद-कारकः।।
व्यवहारपरिस्पन्दसौन्दर्यव्यवहारिभिः
सत्काव्याधिगमादेव नूतनौचित्यमाप्यते।।
चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।
वक्रोक्तिजीविते १, ४, ६।

३. कटुकौषधवच्छास्त्रमविद्याव्याधिनाशनम्।
आह्लाद्यमृतवत्काव्यमविवेकगदापहम्।। तत्रैव,

चित्य-परिज्ञानम्, (३) चतुर्वर्गफलास्वादादपि विलक्षणमन्तश्चमत्कार-वितानमिति प्रयोजनत्रयं सिद्ध्यति।

८. आनन्दप्राप्तिरेव काव्यस्य परमं प्रयोजनमिति मन्यमानेन धनञ्जयेन--

आनन्दनिष्यन्दिषु रूपकेषु व्युत्पत्तिमात्रं फलमल्पबुद्धिः।
योऽपीतिहासादिवदाह साधुस्तस्मै नमः स्वादु-पराङ्मुखाय॥[१]

इत्येवं प्रतिपादयता इतिहासपुराणादेरेव लभ्यं चतुर्वर्गफलं काव्यस्य नास्ति असाधारणं फलमिति समुद्घोषयाञ्चक्रे।

९. दोषरहितं, गुणसहितं, अलङ्कारैलङ्कृतं, रसान्वितं च काव्यं कुर्वाणः कविः कीर्तिं प्रीतिञ्च लभते इति परिभाष माणो भोजराजःकाव्यस्य कीर्तिं प्रीतिरूपं प्रयोजनद्वयं स्वीकुरुते॥[२]

१०. पूर्वोक्तनां काव्य-प्रयोजनानां सारतत्त्वं सङ्कलयन् मम्मटाचार्यः प्राह--

काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये।
सद्यः परनिर्वृतये कान्तासंमिततयोपदेशयुजे॥[३]

इति अत्र काव्यस्य यानि षट्प्रयोजनानि प्रतिपादितानि तेषामयमाशयः

१. कालिदासादयः काव्य-रचनया यथा यशोऽधिगतास्तथैव सुकवयः सत्काव्य-निर्माणेन यशोऽधिगच्छन्तीति यशः काव्यस्य सार्वकालिकं सार्वभौमिकं प्रयोजनम्।

२. बाणधावकादयो यथा काव्यं निर्माय श्रीहर्षादिनृपेभ्यः प्रचुरं धनमर्जयामासुस्तथैव सुकवयःसत्काव्याद् धनमर्जयन्ति। अतोधनलाभः काव्यस्य निर्विवादं प्रयोजनम्।

---

१. दशरूपके

२. निर्दोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्तिं प्रीतिं च विन्दति।सरस्वतीकण्ठाभरणे (प्रथमपरिच्छेदे)

३. काव्यप्रकाशे १, २।

३. मुनि-गुरु-नृप-सचिवादिजनानां सविधे कथं व्यवहर्तव्यम् इति व्यवहार ज्ञानं सत् काव्याधिगमाद् भवतीति व्यवहार ज्ञानं काव्य-प्रयोजनम्।

४. रामायणस्तोत्रादिसत्काव्यस्य निर्माणेन, पाठेन, श्रवणादिना सत्कवयः श्रद्धालवश्च रोगाद्यमङ्गलं निवारयामासुर्निवारयन्ति चेति दुरितनिवारणं काव्यस्य प्रयोजनम्।

काव्यानुशीलनात्परं विगलितवेद्यान्तरं ब्रह्मास्वादसहोदरं यं परमानन्दमास्वादयति सहृदयः स एवालौकिकानन्दः काव्यस्य सकलप्रयोजनमौलिभूतमिति प्रायेण सर्वे आमनन्ति।

६. आचार्यमम्मटानुसारं काव्यस्य षष्ठं प्रयोजनं विद्यते कान्तासंमि-तोपदेशः। यद्यपि वेदंपुराणादिशास्त्राणि सर्वाणि विधिनिषेधौ समुपदिशन्ति, काव्यमपि तदुपदेशं विदधाति किन्तु काव्यस्य तदुपदेशे किमपिवैलक्षण्यं भवति।

(क) प्रभुसंमितशब्दप्रधानवेदःशास्ति। तद्वचनम् अवश्य-कर्तव्यत्वेन आज्ञाधानं करोति। भयात् तद्वचनं जनोऽनुपालयति।

(ख) सुहृत्संमितार्थप्रधानं पुराणादिकं कर्तव्याकर्तव्ये प्रबोधयत् येनेष्टं तेन गम्यतामित्युपदिशति।

(ग) एताभ्यां विलक्षणं कान्तासंमितं लोकोत्तर-वर्णना-निपुण कवि-कर्म काव्यम् कान्तेव सरसतापादनेन स्वाभिमुखी कृत्य रामादिवद् वर्तितव्यं, न च रावणादिवत् इति श्रवणपेयं मधुरं समुपदिशति,यच्च सानन्दमनुसरणीयं भवति। काव्योपदेशवचनं श्रवणे मधुरम्, अर्थावबोधने मधुरं, सत् परिणामसुखावहमिति वस्तुतः सर्वातिशायि। एतस्य च मधुरं रसं न केवलं सुमतयः सुकुमारमतयश्चापि तथैवास्वाद-यन्ति।

आचार्यमम्मटात् परवर्तिभिराचार्यैर्निदिष्टेषु काव्यप्रयोजनेषु त एवं पूर्वस्वरा गुञ्जन्ति। यथाहि–

११. काव्यं कुर्वीत कीर्तये [1] इतिवाग्भटस्य काव्यालङ्कारे'

१२. काव्यमानन्दाय यशसे कान्तातुल्योपदेशाय च इति हेमचन्द्रस्य काव्यानुशासने;

१३. यद्वेदात् प्रभुसंमितादधिगतं शब्दप्रधानाच्चिरं,
यच्चार्थप्रवणात् पुराणवचनादिष्टं सुहृत्संमितात्।

कान्तासंमितया सरसतामापाद्य काव्य-श्रिया,
कर्तव्ये कुतुकी बुधो विरचितस्तस्यै स्पृहां कुर्महे॥

परिवर्धते विज्ञानं सम्भाव्यते यशो विसर्पन्ति गुणाः।
श्रूयते सुपुरुषचरितं किं तद्येन न हरन्ति काव्यालापाः॥[3]
इति विद्यानाथस्य प्रतापरुद्रयशोभूषणे,

१४. काव्यं प्रमोदाय, अनर्थपरिहाराय, व्यवहार-ज्ञानाय, त्रिवर्गफल-लाभाय, कान्तातुल्योपदेशाय, कीर्तये चे ति द्वितीयवाग्भटस्य काव्यानुशासने,

१५. चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि।
काव्यादेव॥ इति विश्वनाथकविराजस्य साहित्यदर्पणे,

१६. लाभः, पूजाख्यातिः, धर्मः कामश्च, मोक्षश्च।
इष्टानिष्टप्राप्तित्यागौ ज्ञानं फलानि काव्यस्य॥
श्रोतृणांद्र ङ्महानन्दः स्वस्वस्मिन्नाभिमानिकः।
तत्कालफलमेतावत् क्रमात् कीर्तिधनादिकम्॥

इति केशवमिश्रस्य अलङ्कारशेखरे.

---

१. वाग्भटालङ्कारे १. २.

२. काव्यानुशासनस्यआरम्भे।

३. प्रजापरुद्रयशोभूषणे प्रयोजनप्रकरणे।

१७. **कीर्ति-परमाह्लादगुरुराजदेवताप्रसादानेकप्रयोजनकस्य काव्यस्ये**ति पण्डितराजजगन्नाथस्य रसगङ्गाधरे तदादिषु प्रतिपादितानि प्रयोजनानि विभिन्नपदगुम्फितान्यपि भावैकसूत्रनिबद्धानि सन्ति।

उपर्युक्तेषु प्रयोजनेषु कानिचित् कविविषयकाणि, कानिचित् सहृदयसम्बद्धानि, कानिचिच्चे कविसहृदयोभयविषयकाणि विद्यन्ते।

(क) यशः, अर्थप्राप्तिश्चेति कविविषयकप्रयोजने।

(ख) व्यवहारज्ञानं, सदुपदेशः, बुद्धिविवर्धनञ्चेति सहृदय-पाठकस्य प्रयोजनानि, प्रतिभाव्युत्पत्तिशालिनः सुकवेः ज्ञानादीनां पूर्वतः सिद्धत्वात्। काव्यानुशीलनादनुभूयमानः परमाह्लादोऽपि सहृदयस्यैव काव्यास्वादनकाले कवेरपि सहृदयान्तःपातितया रसास्वादः इति मन्यन्तेऽभियुक्ताः।[१]

(ग) शिवेतरक्षतिचतुर्वर्गफलप्राप्ती उभयसम्बद्धे भवतः।

केचित्तु चतुर्वर्गफलावाप्तिप्रयोजनमपि सहृदयस्यैवेति मन्यन्ते, यतः शास्त्राण्यधीत्य व्युत्पन्नः कविः काव्यं कर्तुं क्षमते, स च शास्त्रज्ञानेनैव चतुवर्गफलमवाप्तुं शक्नोति, अतस्तस्य कृते शास्त्रमेव साधनम्।

शृङ्गारादिप्रियाः सुकुमारमतयो नीरसेभ्यः शास्त्रेभ्यो बिभ्यति अतस्तेषां कृते लघुना मृदुना चोपायेन काव्यद्वारैव चतुर्वर्गावबोधो जायते, अतश्चतुवर्गफलावाप्तिः सहृदयसुकुमारमतेरेव प्रयोजनमिति तत्तात्पर्यम्।

वस्तुतः शास्त्रप्राप्तज्ञानस्य प्रायोगिकविधिना यथा दार्ढ्यं क्रियते, तथैव कविरपि शास्त्रद्वारावगतं चतुर्वर्गज्ञानं लोकोत्तरवर्णननिपुणकवि-कर्मयोगेन[१] समवाप्नोति। अतः शिवेतरक्षतिरिव चतुर्वर्गफलावाप्तिरपि कविसहृदययोरुभयोः प्रयोजनम्।

---

१. काव्यप्रकाशस्य प्रदीपाख्यटीकाकृतः गोविन्दठक्कुरः।

पाश्चात्यकाव्यशास्त्रस्य विवेचकेन **अरस्तू**महाभागेन त्रास-करुणयो रुद्रेकेण तादृशमनोविकाराणां विरेचनद्वारा आनन्दानुभूतिः इति त्रासदी-रूपस्य उत्कृष्टनाट्यकाव्यस्यप्रयोजनं प्रतिपादितं तत् पौरस्त्यकाव्य-शास्त्रानुकूलम्। **क्रोचेप्रभृतयः** पाश्चात्त्यकाव्यसमालोचकाः **कला, कलायाः कृते** इत्येवं मन्वानाः सत्यं नीतिशास्त्रस्य शिवं च अर्थशास्त्रस्य विषयं स्वीकुर्वाणाः **सुन्दरमेव केवलम्** यत्काव्यकलायाः प्रयोजनं मन्यन्ते,तत् पौरस्त्यपद्धत्या न समीचीनतां भजते। अत्र काव्यं न केवलं कलामात्रम् अपि तु गूढतत्त्वस्य शंसनात्, **रामादिवद्वर्तितव्यम् न रावणादिवत्** इत्यादिरूपेण शासनाच्च काव्यं शास्त्रमपि। अत एव–

**यद्विधौ च निषेधे च व्युत्पत्तेरेव कारणम्।**
**तदध्येयं विदुस्तेन लोकयात्रा प्रवर्तते॥**

**काव्यं शास्त्रेतिहासौ च काव्यशास्त्रं तथैव च।**
**काव्येतिहासः शास्त्रेतिहासस्तदपि षड्विधम्॥**[२] इति

काव्यमपि शास्त्रमित्युच्यते। अतश्च

**काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्,**[३]

इत्यादिकथनं सङ्गच्छते।

कविसहृदयोभयविषयकं काव्यस्य मुख्यं प्रयोजनन्तु परमानन्द एव। अत्र रसालङ्काररीतिध्वनिवक्रोक्त्यौचित्यसम्प्रदायानां सर्वेषामैकमत्यवरीवर्ति।

वस्तुतः सुकवयस्तु काव्यकल्पद्रुमात् सर्वमभीप्सितं कामयन्ते लभन्ते च। यथाह कविताकामिनीविलासः कविकुलगुरुः कालिदासः

**प्रवर्ततां प्रकृतिहिताय पार्थिवः**
**सरस्वतीश्रुतिमहती महीयताम्।**

---

१. योगः कर्मसु कौशलम्। गीता २, ५०।

२. भोजराजस्य सरस्वतीकण्ठाभरणे २, १३८।

३. हितोपदेशे।

ममापि चक्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः ॥

सर्वस्तरतु दुर्गाणि सर्वोभद्राणि पश्यतु।
सर्वः कामानवाप्नोतु सर्वः सर्वत्र नन्दतु॥

इत्यादिना।

अतः

एवं संक्षेपतो वक्तुं शक्यते सारवन्मतम्।
अभीष्टफलदं काव्यं नूनं कल्पद्रुमायते॥ इति· शम्।

---

# रसविच्छित्तिमीमांसा

रसादृते न कोऽप्यर्थः प्रकृष्टत्वेन वर्तते।
एक एव रसस्तस्मात् काव्यराज्ये नृपायते ॥१॥

काव्यसर्वस्वरूपोऽसौ परमानन्दरूपतः।
परमास्वाद्यतां याति रसिकानां मुदावहः ॥२॥

परानन्दस्वरूपत्वादेकोऽपि परमार्थतः।
रत्यादीनां विभावादेर्भिन्नत्वाद् बहुरूपकः॥ ३॥

तत्रापि प्रकृतिः कश्चित् केचिद् विकृतिरूपिणः।
चित्तवृत्तेश्च वैचित्र्यात् तथात्वं तत्र जायते॥४॥

रसोऽभिमानोऽहङ्कारः शृङ्गारः कुत्रचिन्मतः।
मधुराख्यश्च कुत्रापि रसानन्दावलम्बनात् ॥५॥

विभावाद्यैरभिव्यक्तो भावो यो रसतामितः।
सामाजिकैः सहृदयैः कथमास्वाद्यते तु सः ॥६॥

जायतेऽस्य समुत्पत्तिरनुमा भुक्तिरेव वा।
अभिव्यक्तिरथो वापि विचार्यन्त्वत्र युक्तितः ॥७॥

विषयत्वं चितेस्तस्य चिन्मयत्वमथापि वा।
अलौकिकत्वं यत्तस्य चर्चनीयं विशेषतः ॥८॥

रसभावरसाभासभावशान्त्यादयस्तु ये।
काव्यात्मरूपालङ्कार्या आराध्याः सर्वसाधनैः ॥९॥

तेऽप्यलङ्कारतां यान्ति संशयः सुधियामपि।
इत्याद्यनेकविषयाः सुचिन्त्या रसवर्त्मनि ॥१०॥

मुनिना भरतेन नाट्यशास्त्रे **रस-भावाभिनय-धर्मि-वृत्ति-प्रवृत्ति-सिद्धिस्वरातोद्य-गान-रङ्गादीनां निरूपणप्रसङ्ग**[१] **तत्र रसानेव तावदादौ अभिव्याख्यास्यामः नहि रसादृते कश्चिदर्थः प्रवर्तते** इत्येवमभिदधानेन नाट्ये काव्ये च रसस्यैव प्राधान्यं मन्यमानेन तस्यैव सर्वप्रथमं निरूपणं प्रचक्रे। यथा हि बीजात् प्रजायमानो वृक्षः पुष्पफलादिकं प्रसूयमानो विश्वं रसमयीकरोति, तथैव काव्य-नाट्ययोः मूलरूपः कविगतो भावः, रसः वृक्षस्थानीयं काव्यं वर्धयन् पुष्पादिस्थानीयमभिनयादिकं प्रसूय मधुरफलरसास्वादेन सामाजिकं समाह्लादयति।[३]

परमार्थरूपस्यास्य रसस्य नाट्यशास्त्रे–

**विभावानुभावव्यभिचारिसंयोगाद्रस–निष्पत्तिः,**[४] इति शास्त्रीयदृष्ट्या यथा निरूपणं वर्तते, तथैव सारल्येन लौकिकरीत्यापि तन्निरूपणं वरीवर्ति। तथाहि– **रस इति कः पदार्थः। उच्यते- आस्वाद्यत्वात् कथमास्वाद्यते रसः यथाहि नाना व्यञ्जन-संस्कृतमन्नं भुञ्जानाः रसानास्वादयन्ति सुमनसः पुरुषा हर्षादींश्चाधिगच्छन्ति तथा नाना-भावाभिनयव्यञ्जितान् वागङ्गसत्वो- पेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षका हर्षादीं श्चाधि गच्छन्ति। तस्मान्नाट्य रसा इत्यभिव्याख्याताः**[५]। एवञ्च सामाजिकानां रसास्वानुभवः सम्यक् तत्र

---

१. रसा भावा ह्यभिनया धर्मी वृत्ति-प्रवृत्तयः।
सिद्धिः स्वरास्तथातोद्यं गानं रङ्गश्च संग्रहः ।। ना० शा० ६, १०।

२. तत्रैव ६, ३१ कारिकायां वृत्तिः।

३. यथा बीजाद् भवेद् वृक्षो वृक्षात् पुष्पफलं तथा।
तथामूलं रसाः सर्वे तेभ्यो भावा व्यवस्थिताः।। तत्रैव ६, ३८। तदेव मूलं बीजस्थानीयात् कविगतो रसः ।।........ ततो वृक्षस्थानीयं काव्यम्। तत्र पुष्पादिस्थानीयोऽभिनयादिनंट-व्यापारः। तत्र फलस्थानीयं सामाजिकरसास्वादः। तेन रसमयमेव विश्वम्। तत्रैव अभिनवभारती।

४. नाट्यशास्त्रे षष्ठाध्याये।

५. तत्रैव ६, ३२-३३ कर्णरकावृत्तिः।

प्रदर्शितः एतत् प्रसङ्गे आलम्बनोद्दीपनविभावयोः, आङ्गिक-वाचिकसात्त्विकाहार्यरूपानुभावानां[1], निर्वेदग्लानिशङ्कादीनां त्रयस्त्रिंशतो व्यभिचारिभावानां शमसहितरतिहासशोकादीनां नवानां स्थायिभावानां, शान्त[2]शृङ्गारहास्यकरुणादिनवानां रसानाञ्च साङ्गोपाङ्गं यथा वर्णनं मुनिना कृतं तेन तन्मते रसप्राधान्यं सुव्यक्तं भवति। एवं हि काव्यरसस्य आनन्दरूपत्वेन परमार्थतः एकत्वेऽपि रति-हासादिस्थायिभावानां भेदात् शृङ्गारहास्यादिरूपा औपधिकभेदाः प्रतीयन्ते तथैव रसविषयेऽपीति स्पष्टयति अभिनवगुप्तपादाचार्यः यथा **पूर्वत्र बहुवचनमत्र चैकवचनं प्रयुञ्जानस्यायमाशयः। एक एव तावत् परमार्थतो रसः सूत्रस्थानीयत्वेन रूपके प्रतिभाति। तस्यैव पुनर्भागदृशा विभागः॥**[3]

कविकर्णपूरोऽपि उपर्युक्तमतमनुसरन् एवमेव सिद्धान्तति एतद्विषये–

**रसस्यानन्दधर्मत्वादेकध्यं, भाव एव हि।**
**उपाधिभेदान्नानात्वं, रत्यादय उपाधयः॥**[4] इति

उपाधिभेदान्नानात्वं, रत्यादिस्थयिभावानां संख्याया अनैयत्याद् रस-संख्यायामपि नैयत्यं नास्ति। तत्र

**शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।**
**बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः॥**

---

१. वागङ्गसत्त्वाभिनयैर्यस्मादर्थो विभाव्यते।
वागङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः॥ तत्रैव ६, ५।
स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।
वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विका मताः ॥ तत्रैव ६, २२,
सत्त्वं जीव-शरीरंर्मा तस्य धः सात्त्विकाः। रसतराङ्गिणी पृ० ५८। जृम्भा च नवमः सात्त्विको भाव इति प्रतिभाति, भानुदत्तमिश्रस्य रसतङ्गिणी पृ० ६६।

२. नाट्यशास्त्रे भरतमुनिना शमस्थायिभावात्मकः शान्तरसोऽपि निरूपित इत्यभिनवगुप्तपादाचार्यः। एतस्य मत्कृतं सयुक्ति विवेचनं ' निबन्धकुसुमाञ्जलौ नाट्यशास्त्रे शान्तरस इत्यत्र द्रष्टव्यम्।

३. अलङ्कारकौस्तुभे ६३।

४. अभिनवभारती पृ० २६९।

इति प्रसिद्धेभ्यो नवभ्यो रसेभ्योऽतिरिक्तः वात्सल्यस्थायिभावो दशमो वत्सलरसोऽपि काव्यजगति प्रसिद्धिं भजते। यथाहि भोजराजः

**शृङ्गारवीरकरुणाद्भुतरौद्रहास्यबीभत्सवत्सलभयानकशान्तनाम्नः**
**आम्नासिषुर्दशरसान् सुधियोवयन्तु शृङ्गारमेव रसनाद्रसमानामः॥**[1]

इति दशसु रसेषु वत्सलमपि परिगणयति।

भोजराजस्तु सरस्वतीकण्ठाभरणे—

**शृङ्गारवीरकरुणरौद्राद्भुतभयानकाः।**
**बीभत्सहास्यप्रेयांस**[2]**: शान्तोदात्तोद्धता रसाः॥**[3] **इति**

उदात्तेन उद्धतेन च अतिरिक्तरसेन सह द्वादशरसान् स्वीकरोति हि तथा **न च अष्टावेवति नियमः, यतः शान्तं, प्रेयांसम्, उद्धतम्, ऊर्जस्विनं च केचिद् रसमाचक्षते। तन्मूलाश्च किल नायकानां धीरशान्तधीरललितधीरोद्धतधीरोदत्तव्यपदेशः**[4] इत्येवं प्रकारेण तत् समर्थयति।

आचार्यरुद्रटेन **रसनाद् रसत्वमिति**[5] सिद्धान्तेन स्थायिभावानां रसत्वमिव सात्त्विकानां व्यभिचारिणाञ्च भावानां समेषाम् एकोन-पञ्चाशतोभावानां यथारसत्वं स्वीक्रियते, तथैव भोजराजेनापि **रत्यादीनामेकोनपचाशताऽपि विभावानुभावव्यभिचारिसंयोगात् पर-प्रकर्षाधिगमे रसव्यपदेशार्हता रसस्यैव मध्यमावस्था**[6] इत्येवं मन्यमानेन

---

१. शृङ्गारप्रकाशे १, ६,
२. वात्सल्यस्थायिकः वत्सल एवायं प्रेयान् रसः। रसांत्विह प्रेमाणमेवमामनन्ति (शृ० प्र० ११) इति प्रेमरसस्तु तस्य शृङ्गार एव
३. सरस्वतीकण्ठाभरणे, ५, १६४।
४. शृङ्गारप्रकाशः ११।
५. इतिमन्तव्या रसाः सर्वे।
रसनाद् रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः।
निर्वेदादिष्वपि तन्निकाममस्तीति तेऽपि रसाः ॥ रुद्रटा १२, ४/३
६. शृङ्गारप्रकाशः १, ११।

रत्यादयो यदि रसाः स्युरतिप्रकर्षे
हर्षादिभिः किमपरमद्धमतद्विभिन्नैः।
अस्थायिनस्त इति चेद् भयहासशोक–
क्रोधादयो वद कियच्चिरमुल्लसन्ति।।

स्थायित्वमत्र विषयातिशयान्मतं चेत्
चिन्तादयः कुत उत प्रकृतेर्वशेन।
तुल्यैव सात्मनि भवेदथ वासनायाः
सन्दीपनात्तदुभयत्र समानमेव।।[१]

इत्येवं रूपेण सर्वेषां विभावानुभावव्यभिचारिणां रसत्वं मन्यते। किन्तु पारमार्थिकतया शृङ्गारमेव रसनाद्रसमामनामः इति **शृङ्गार एव एको रसः** इति स्वसिद्धान्तम्–

वीराद्भुतादिषु च येह रसप्रसिद्धिः
सिद्धा कुतोऽपि वटयक्षवदाविभाति।
लोके गतानुगतिकत्ववशादुपेता–
मेतां निवर्तयितुमेष परिश्रमो नः।।

इति प्रतिपादयता तेन समर्थ्यते शृङ्गाररसवादः।

धनञ्जयेन पूर्वनिर्दिष्टयोः अक्षमृगयारसयोः उत्साहरूपे व्यभिचारिणि अन्तर्भावात् पृथक् रसत्वं नाङ्गीक्रियते। यथा हि हर्षे प्रीतिभक्त्यो रन्तर्भावेन पृथग्भावत्वं नास्ति, तथैव उत्साहे अक्षमृगययोरन्तर्भा-वान्नास्ति वैलक्षण्यमिति तदाशयः।[३]

एवमेव रामचन्द्रगुणचन्द्रकृतनाट्यदर्पणे सम्भवन्ति त्वपरेऽपि–यथा **गर्वस्थायी लौल्यः, आर्द्रतास्थायी स्नेहः, आसक्तिस्थायि व्यसनम्, अरतिस्थायि दुःखम्, सन्तोषस्थायि सुखमित्यादि[४] रूपेण ये लौल्य-**

१. तत्रैव १, ११।

२. तत्रैव, १, १२।

३. प्रीतिभक्त्यादयो भावा मगयाक्ष दयो रसाः।
हर्षोत्साहादिषु स्पष्टमन्तर्भावान्न कीर्तिताः।। दशरू० ४, ८३,।

४. नाट्यदर्पणे पृ० १६३।

**स्नेहव्यसन** दुःखसुखरूपा अतिरिक्तरसा निर्दिष्टास्तेऽपि सर्वे व्यभिचारिषु अन्तार्भूता भवन्तीति पृथक्त्वेन नाङ्गीक्रियन्ते। अत एव अभिनवभारतीकारेण अभिनवगुप्तेन **तेन रसान्तरसंभवेऽपि--- एवं ते नवैव रसाः, पुमर्थोपयोगित्वेन रञ्जनाधिक्येन वा इयतामेव उपदेश्यत्वात्।** इत्येवं प्रदिपादयता नाट्यशास्त्रोक्तानां नवानामेव रसानां वस्तुगत्या रसत्वमिति मन्यते। एवमेव मम्मटेनापि

**रतिर्देवादिविषया व्यभिचारी तथाञ्चितः। भावः प्रोक्तः**[२]

इत्येवमुद्घोषयता नवभ्यो रसेभ्यो भिन्नानां रसत्वं नैवेति निश्चीयते।

एवं सत्यपि महाप्रभुचैतन्यसम्प्रदायाचार्यैः रूपगोस्वामिजीवगोस्वामिकविकर्णपूरमधुसूदनसरस्वतीप्रभृतिभिः उज्ज्वलनीलमणिभक्तिरसामृतसिन्ध्वलङ्कारकौस्तुभभक्तिरसायनादिकाव्यशास्त्रीयग्रन्थरत्नेषु मधुररसस्य परमोत्कृष्टतया यत् सयुक्ति प्रतिपादनं कृतं तत् समीचीनमनुपेक्षणीयञ्च। विशिष्टानुरागरूपरतिस्थायिभावात्मकमधुराख्यभक्तिरसस्य प्रशमनिर्वेदवैराग्यरूपस्थायिनः शान्तरसेऽन्तर्भावो भवितुं न भवतीति पण्डितराजजगन्नाथोऽपि मनुते।[३] स च भरतमुनिप्रतिपादितनाट्यशास्त्रोक्त नवरससंख्यानियमभङ्गभयान्नवैव रसा[४]इति यत् स्वीकरोति तत्त्वन्यत्। एतन्मधुराख्यभक्तिरसप्रसङ्गे कविकर्णपूरः रसराजमिमं प्रेमरसमभिधाय विस्तरेण प्रतिपादयति–

**अथ प्रेमरसः...... अत्र चित्तद्रवः स्थायी प्रेमरसे सर्वे रसा**

---

१. अभिनवभा० पृ० ३४१

२. काव्यप्रकाशे ४,

३. न चासौ शान्तरसेऽन्तर्भावमर्हति। अनुरागस्य वैराग्यविरुद्धत्वात्। रसगङ्गाधरे पृ० ६५।

४. रसानां नवत्वगणना च मुनिवचननियन्त्रिता भज्येत इति यथाशास्त्रमेव ज्यायः। तत्रैव पृ०७६

अन्तर्भवन्तीत्यत्र महीयानेव प्रपञ्चः। केषाञ्चिमते श्रीराधाकृष्णयोः शृङ्गार एव रसः। तन्मतेऽप्येतदुदाहरणं नासङ्गतम्। शृङ्गारोऽङ्गी, प्रेम अङ्गम्, अङ्गस्यापि क्वचिदुद्रिक्तता। वयं तु प्रेमाङ्गी, प्रेम अङ्गम्, अङ्गस्यापि क्वचिदुद्रिक्तता। वयं तु प्रेमाङ्गी, शृङ्गारोऽङ्गम् इति विशेषः। तथाच-

उन्मज्जन्ति निमज्जन्ति प्रेम्ण्यखण्डरसत्वतः।
सर्वे रसाश्च भावाश्च तरङ्गा इव वारिधौ।।[१]

एवमेव प्रेमरसस्वरूपस्य भक्तिरसस्य मुख्यतां परमार्थतां च प्रतिपादयन् **भक्तिरसायने** मधुसूदनसरस्वतीमहाभागः भजनम्-अन्तः करणस्य भगवदाकारतारूपं-भक्तिः[२]

द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता।
सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते।।[३]

इत्येवं रूपेण तत्त्वज्ञानेन संसाध्यं परमफलस्वरूपमिति मनुते। भज्यते सेव्यते भगवदाकारः अन्तःकरणे क्रियते अनया इति करण-व्युत्पत्त्या भक्तिशब्देन श्रवणकीर्तनस्मरणपादसेवनपूजनवदनदास्यसख्य-स्वात्मनिवेदनरूपं साधनमभिधीयते।[४]

अस्य च भक्तिरसस्य आलम्बनविभावो भगवान्, उद्दीपनविभावः तुलसीचन्दनादिः, अनुभावो नेत्रविक्रियादिः, व्यभिचारिणो निर्वेदादयः। व्यक्तीभवद्भगवदाकाररूप इत्याख्यः स्थायिभावः परमानन्दसाक्षा-त्कारात्मकः प्रादुर्भवति, स एव भक्तियोग इति, तं परमं निरतिशयं पुरुषार्थं निरुपमसुखसंविद्रूपमस्पृष्टदुःखं वदन्ति रसज्ञाः।[५] वैष्णवाचार्याणां मते

---

१. अलङ्कारकौस्तुभे पृ० १४८।
२. भक्तिरसायने पृ० २९।
३. तत्रैव १, ३।
४. तत्रैव पृ० २२।
५. भक्तिरसायने पृ० १३

अस्मिन्नेवं मधुराख्यप्रेमभक्तिरसे **रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति**[1] श्रुत्यर्थो वस्तुतश्चरितार्थतां गच्छति।

**यतः भगवान् परमानन्दस्वरूपः स्वयमेव हि।**
**मनोगतस्तदाकाररसतामेति पुष्कलम्॥**[2]

देवादिविषया रतिर्भाव इति मम्मटादिमतं दूषयन् सरस्वतीमहाभागः प्राह–

**रतिर्देवादिविषया व्याभिचारी तथाञ्चितः।**
**भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः॥**

**देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात्।**
**तद्योज्यं, परमानन्दरूपे न परमात्मनि॥**

**कान्तादिविषया वा ये रत्याद्यास्तत्र नेदृशम्।**
**रसत्वं पुष्यते पूर्णसुखस्पर्शित्वकारणात्॥**

**परिपूर्णरसा क्षुद्ररसेभ्यो भगवद्रतिः।**
**खद्योतेभ्य इवादित्यप्रभेव बलवत्तरा॥**[3]

एवं हि काव्यशास्त्रे अनेकेषु रसेषु उल्लिखितेष्वपि शृङ्गारहास्यकरुणरौद्रवीरभयानकबीभत्साद्भुतवत्सलशान्तभक्तिरूपा एकादशरसा एव प्रामुख्यं भजन्ते।

नाट्यकाव्यशास्त्रयोः परमार्थत आनन्दरूपस्य रसस्य एकत्वेऽपि रत्यादीनां स्थायिनां भेदात् शृङ्गारादिरसानामनेकत्वं विवेचितं वर्तते। तत्र विभिन्नेषु रसेषु काश्चित् प्रकृतिरूपाः अन्ये च तद्विकृतिरूपा इति प्रतिपादिताः सन्ति। तथाहि–

---

१. तैत्तिरीयोपषिदि २, ६।
२. भक्तिरसायने १, १०।
३. तत्रैव २, ७३-७६।

**( १ ) शान्त एव प्रकृतिरसः**

अभिनवगुप्तपादानुसारं भरतमुनिर्नाट्यशास्त्रे **स्थायिभावान् रसत्वमुपनेष्यामः** इत्यपक्रम्य सर्वप्रथमं **शान्तो नाम शमस्थायिभावात्मकः** इत्यादिरूपेण **शान्तरसं** प्रतिपादयामास। तत्र विषयेभ्यश्चित्तवृत्तेर्विपरिवृत्त्या सर्वरसानां शान्तप्राय एव आस्वादो भवतीति कारणात्, शान्तस्य सर्वरसप्रकृतित्वाभिधानाय च शान्तस्य पूर्वमभिधानमकरोत् येषु नाट्यशास्त्रस्य चिरन्तनपुस्तकेषु शान्तरसस्य पूर्वमुल्लेख आसीत् तत्र चैवं पाठः समुपलभ्यते—

**भावा विकारा त्याद्याः शान्तस्तु प्रकृतिर्मतः।**
**विकारः प्रकृतेर्जातः पुनस्तत्रैव लीयते।**

**स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।**
**पुनर्निमित्तापाये च शान्त एवोपलीयते॥**[१]

एवं हि अभिनवगुप्तेन अभिनवभारत्यां प्रतिपादितत्वात् शान्तरस एव प्रकृतिरस इति पर्यवस्यति।

**( २ ) शृङ्गारवीररौद्रबीभत्सानां मौलिकरसत्वम्—**

नाट्यशास्त्रे च उपर्युक्तकथनाद्व्यतिरिक्तम्—

**शृङ्गाराद्धि भवेद्धास्यो रौद्रात्तु करुणो रसः।**
**वीराच्चैवाद्भुतोत्पत्तिः बीभत्साच्च भयानकः॥**[२]

इत्यपि समुपलभ्यते। एतेन शृङ्गाररसात् हास्यरसः, रौद्रात् करुणः, वीरात् अद्भुतः, बीभत्साच्च भयानकरसः समुत्पद्यते। अतः चत्वारः प्रकृतिरसाः चत्वारश्च विकृतिरसाः सन्तीति विज्ञायते।

नाट्यशास्त्रस्य उपर्युक्तमतं समर्थयता दशरूपकर्त्राधनञ्जयेन प्रतिपाद्यते यत् काव्यार्थस्य विभावनात् परं यत् साधारणीकरणं जयते ततः

---

१. नाट्यशास्त्रस्याभिनवभात्याम् (गायकवाडसंस्करणे) पृ० ३३५, ३४०।

२. नाट्यशास्त्रे ६, ३९।

परमनुभूयमानः आनन्दरूपास्वादः एकरूपः सन्नपि प्रतिनियतविभावादि-कारणवशात् तत्र चित्तवृत्तिः चतुर्विधा भवति। शृङ्गारे चित्तवृत्तेर्विकासः, वीरे विस्तारः, बीभत्से क्षोभः, रौद्रे च विक्षेपो भवति। इयमेव मनोदशा क्रमशः हास्ये, अद्भुते, भयानके, करुणे च जायते। अतः शृङ्गारात् हास्यः, वीरादद्भुतः वीभत्साद् भयानकः, रौद्रात् करुणःच समुत्पद्यन्ते।[१]

**( ३ ) करुण एव एकः प्रकृतिरसः**

महाकविर्भवभूतिः उत्तररामचरितनाटके

**एको रसः करुण एव निमित्तभेदाद्**
**भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।**
**आवर्तबुद्बुदतरङ्गमयान् विकारान्**
**अम्भो यथा सलिलमेव हि तत्समग्रम्॥**[२] इति पद्येन

**करुण एव एको रस** इति प्रतिपादयामास। तत्रायं तदाशयः, यथा हि एकमेव सलिलम् आवर्तबुद्बुदतरङ्गादिविकृतिमासाद्यापि प्रकृतिरूपेण सर्वत्र एकं सलिलमेव, तथैव एक एव करुणरसः सखित्वपतित्व-पत्नीत्वादिरूपात् विभावाद्याश्रयभेदात् भिन्न इव विवर्तते। वस्तुतः शृङ्गारहास्यादिरूपेण प्रतीयमानत्वेऽपि मूलतः सर्वत्र करुण एव। प्रकृतश्लोकं व्याचक्षाणेन वीरराघवेण मानवजीवने करुणस्य प्राचुर्यात्, रागिविरागिजनसाधारण्याच्च करुण एव प्रकृतिरस इति भवभूतेरत्र तात्पर्यमिति वर्ण्यते।

---

१. स्वादः काव्यार्थसंभेदादात्मानन्दसमुद्भवः।
विकासविस्तरक्षोभविक्षेपैःस चतुर्विधः॥
शृङ्गारवीरबीभत्सरौद्रेषु मनसः क्रमात्।
हास्याद्भुतभयोत्कर्ष- करुणानां एव हि॥
अतस्तज्जन्यता तेषामत एवावधारणम्॥ दशरू० ४, ४३-४५

२. उत्तररामचरिते ३, ४७।

वस्तुतोऽत्र दृष्टान्ते सलिलस्य आवर्तबुद्बुदतरङ्गादयः यथा तात्त्विकान्यथाभावरूपपरिणामाः न तथा दार्ष्टान्तिके करुणस्य शृङ्गारादयः परिणामाः अतात्त्विकान्यथाभावरूपविवर्तत्वे तु करुणस्य प्रकृतित्वं शृङ्गारादेस्तद्विकृतित्वमेव न सम्पद्यते। अपरञ्च शोकस्थायिभावात् करुणरसात् रतिस्थायिभावः शृङ्गारः, हासस्थायी हास्यः, क्रोधस्थायी रौद्रः, विस्मयस्थायी अद्भुतः, उत्साहस्थायी वीरः, जुगुप्सास्थायी बीभत्सः, भयस्थायि भयानकञ्च कथं जायेरन् इति विजानतो भवभूतेः एको रसः करुण एवेति न सर्वतन्त्रसिद्धान्तः। उत्तररामचरिते तु शृङ्गारहास्यवीरादीनामपि परिणामःआ स्वादः करुणायमान एवेति प्रतितन्त्र- सिद्धान्तोऽयं भवितुमर्हति।[१]

## (४) शृङ्गार एव प्रकृतिरसः[२]

भोजराजः **शृङ्गारमेव रसनाद् रसमामनामः**[३] इत्येवं रूपेण शृङ्गारप्रकाशे शृङ्गारमेव प्रकृतिरसं मनुते।

(क) शृङ्गारप्रकाशेअहङ्कारशृङ्गार एव प्रकृतिरसः

**रसोऽभिमानोऽङ्कारः शृङ्गार इति गीयते।**
**योऽर्थस्तस्यान्वयात्काव्यं कमनीयत्वमश्नुते।।**[४]

स शृङ्गारः सोऽभिमानः सरसः। तत एव रत्याद्यो जायन्ते। तैश्चायं प्रकर्षप्राप्तैः सप्तार्चिः अर्चिश्चव प्रकाशमानः शृङ्गारिणामेव स्वदते इति। अर्थात् अहम्बुद्धिरूपादहङ्कारात् तथा पदार्थेषु आत्मीयज्ञानरूपादभिमानात् आत्मरतिः शृङ्गाररूपेण परिणमते। अतः अहङ्कारः अभिमानो वा शृङ्गाररसः। एतत् सम्बन्धादेव काव्यं कमनीयं भवति। अतः शृङ्गार एव

---

१. एतस्य विशेषप्रतिपादनं निबन्धकुसुमाञ्जलौ पृ० ६४-६६ द्रष्टव्यम्।
२. शृङ्गारप्रकाशे १, ६।
३. सरस्वतीकाण्ठाभरणे ५०१।
४. शृङ्गारप्रकाशे १७।

मौलिको रसः। बाह्यपदार्थे यदा आत्मीयबुद्धिर्भवति तदैव स आनन्दाय कल्पते। अत आत्मरतेर्जायमानः शृङ्गार एव प्रकृतिरलः।

### (ख) प्रेमशृङ्गार एव प्रकृतिरसः

भोजराजः अहङ्कारशृङ्गारान्तर्गततया प्रेमशृङ्गारं निरूपयन् **रसं त्विह प्रेमाणमेव आमनन्ति,**[१] इति प्रेमशृङ्गारस्यैव मौलिकत्वं प्रतिपादयति।

सर्वेषामेव हि रत्यादिप्रकर्षाणां रतिप्रियो रणप्रियः परिहासप्रियः अमर्षप्रिय इति प्रेमण्येव पर्यवसानं भवति।[२] अतः प्रेम एको रसः।

### (ग) रतिशृङ्गार एव प्रकृतिरसः

अग्निपुराणानुसारं सच्चिदानन्दरूपस्य परब्रह्मणः आनन्दात्मको रसः कदाचित् चैतन्यचमत्काररूपेण कस्यचिन्मुक्तात्मनो हृदि अभिव्यज्यते। एतस्य चिदानन्दरसस्य आद्यो विकारः अहङ्कारो जायते। एतस्माज्जायमानः अभिमानः सकलं जगद् व्याप्नोति। अस्मादेवाभिमानात् समुत्पन्ना रतिर्विभावाद्यैः परिपुष्टा सती शृङ्गाररसरूपेण जायते अस्मादेव रतिशृङ्गारात् स्वस्वभावप्रभावात् हास्यादयो विभिन्नरसा जायन्ते। अतः रतिशृङ्गार एव मूलो रस इति तत्तात्पर्यम्।[३]

---

१. शृङ्गारप्रकाशे ११।

२. सरस्वतीकण्ठाभरणे पृ० ६६०, प्र० ६५०।

३. अक्षरं परमं ब्रह्म सनातनमजं विभुम्।
वेदान्तेषु वदन्त्येकं चैन्यं ज्योतिरीश्वरम्।।
आनन्दः सरसस्तस्य व्यज्यते स कदाचन।
व्यक्तिःसा तस्य चैतन्यचमत्काररसाह्वया।
आद्यस्तस्य विकारो यः सोऽहङ्कार इति स्मृतः।
ततोऽभिमानस्तत्रेदं समाप्तं भुवनत्रयम्।।
अभिमानाद् रतिः सा च परिपोषमुपेयुषी।
व्यभिचार्यादिसामान्याच्छृङ्गार इति गीयते।।
अ० पु० ३३९, १-४।

यथा हि त्यागात् लक्ष्मीः शोभते, तथैव अस्माद् रसाद् वाणी सुशोभते। अत एव कविः यदि शृङ्गारी भवति तर्हि रसमयं विश्वं सृजति, अन्यथा तस्य काव्यजगदेव नीरसं भवति।[1]

### ५. अद्भुत एव प्रकृतिरसः

**चमत्कारजनको हि विस्मयः परमानन्दाय कल्पते।** चमत्कारो हि नाम चित्तविस्ताररूपविस्मयापरपर्याय एव अयमेव विस्मयरूपश्चमत्कारः सर्वत्र शृङ्गारादिरसेषु सारभूतो वर्तते एतस्मादेव विस्मयरूपस्थायिभावात् अद्भुतरसोऽभिव्यज्यते। अतो विश्वनाथकविराजेन स्वपितामहनारायणपादमतमनुसरता तदुक्तिमुद्धरता प्रोच्यते **चमत्कारश्चित्तविस्ताररूपः विस्मयापरपर्यायः तत्प्राणत्वं च अस्मत् पितामहनारायणपादैरुक्तम्। तदाह धर्मदत्तः स्वग्रन्थे–**

**रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।**
**तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥**
**तस्मादद्भुतमेवाह कृती नारायणो रसम्॥**[2] इति

भानुदत्तमिश्रस्य **रसतराङ्गिण्यामपि** मतमिदं प्राप्यते यत् शृङ्गारादौ चमत्कारदर्शनाद् यत्र मनोवृत्तिः अङ्गतया भासते तत्र शृङ्गारादय एव रसाः। प्राधान्येन यत्र भासते तत्र अद्भुत एव रसः इति।[3]

एवञ्च अद्भुतरसैकपक्षपातिनां मतमिदं नासमीचीनतामञ्चति।

---

१. तद्भेदाः काममितरे हास्याद्या अप्यनेकशः।
स्वस्वस्थायिविशेषोत्थपरिपोषस्वलक्षणाः॥
लक्ष्मीरिव विना त्यागान्न वाणी भाति नीरसा।
अपारे काव्यसंसारे....... तथेदं परिवर्तते॥
शृङ्गारी चेत् कविः काव्ये जातं रसमयं जगत्।
स चेत् कविर्वीतरागो नीरसं व्यक्तमेव तत्॥ अग्निपुराणे ३३९, ५-१।

२. साहित्यदर्पणे ३ प०।

३. रसतरङ्गिणी पृ० २८।

## ( ६ ) भक्तिरस एव मौलिको रसः

वैष्णवसम्प्रदायाचार्याणां मते पूर्वप्रतिपादितदिशा भक्तिरस एव एकः प्रकृतिमुख्यरसः। अन्ये च तस्यैव भेदा इति निरूपयति मधुसूदनसरस्वतीमहाभागः

मुख्यस्तु पञ्चधा शान्तः प्रीतिःप्रेयश्च वत्सलः।
मधुरश्चेत्यमी ज्ञेया यथापूर्वमनुत्तमाः।।
हास्याद्भुतस्तथा वीरः करुणो रौद्र इत्यपि।
भयानकः सबीभत्स इति गौणश्च सप्तधा।।
एवं भक्तिरसो भेदाद् द्वयोर्द्वादशधोच्यते।।[1]

रसस्य ऐतिहासिकक्रमेण विचारणायां मतमिदं सुस्पष्टं भवति यत् काव्यशास्त्रीयसम्प्रदायस्य यस्य कस्यापि पक्षपातिन आचार्याः नाट्यशास्त्ररत्नाकराज्जायमानस्य रसपरिजातस्य सुखदां शीतलां छायां सेवमाना मधुरं फलमास्वादयन्ति स्म। अतः रसध्वनिसम्प्रदायातिरिक्त-सम्प्रदायाचार्याणां काव्यशास्त्रीयग्रन्थेष्वपि रसविषयकविचारः प्राचुर्येण समुपलभ्यते। तद्विवेचनात् पूर्वं रामायणमहाभारतपुराणादौ विहिताया रसचर्चाया निर्देशोऽत्र समीचीनतामावहति।

१. वाल्मीकिरामायणं शोकस्थायिभावमूलककरुणरसजन्यमिति स्वयमेव आदिकाव्यं प्रमाणयति

मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।।[2]
शोकार्तस्य प्रवृत्तो मे श्लोको भवतु नान्यथा।[3]

इत्यादिना प्रमाणयति। एतच्च कुमारौ कुशलवौ

---

१. भक्तिरसायने ५, ९, ६-८।
२. रामायणे १, २, १५।
३. तत्रैव १, २, १८।

**पाठ्ये गेये च मधुरं प्रमाणैस्त्रिभिरन्वितम्।।**
**जातिभिः सप्तभिर्बद्धं तन्त्रीलयसमन्वितम्।।**
**रसैः शृङ्गारकरुणहास्यवीरभयानकैः।**
**रौद्रादिभिश्च संयुक्तं काव्यमेतदगायताम्।।** इत्यादिना।[1]

अत्रादिपदेन बीभत्साद्भुतशान्ता गृह्यन्ते इति व्याचचक्षे गोविन्दराजः। अतः प्रसिद्धानां समेषां नवानां रसानां वर्णनं प्राप्यते रामायणे।

२. वैयासकिं महाभारतं समुद्घोषयति **यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।।** इति। अतः अस्मिन् रत्नाकरे काव्यशास्त्रीयरसादीनि सर्वाणि रत्नानि उपेलभ्यन्ते, यानि अलङ्कारशास्त्रीयग्रन्थेषु बहुश उद्धृतानि उदाहृतानि च सन्ति। आनन्दवर्धनाचार्यः महाभारतस्य अङ्गिनं शान्तरसं मन्यते। शृङ्गारवीरादयः अङ्गरसाः सन्ति। उत्तरविलापे[2] करुणः सहृदयहृदयं द्रवीकरोति वीर-रौद्रादिचमत्कारस्तु यत्र तत्र हृदयं चमत्करोति। रसध्वनिवस्तुध्वन्यलङ्का-रध्वनीनामुदाहरणैः काव्यशास्त्रं समुज्जृम्भते। गृध्रगोमायुसंवादे[3] प्रबन्धध्वनिःप्रकाशते एवं हि समस्तरसवर्णने महाभारतं महीयते।

(३) विष्णुधर्मोत्तरपुराणं स्वकीये काव्यशास्त्रीयभागे[4] नाट्य-शास्त्रानुसारं शान्तप्रधानान् नवानपि रसान् विस्तरेण निरूपयति।[5] रसस्य विभावविभावानुभावव्यभिचारिणां, वर्णदेवताभेदप्रभेदादीनां, रसेषु प्रकृति-विकृतिरूपाणाञ्च सर्वं विवेचनं भरतनाट्यशास्त्रमनुसरति तत्र शान्तरसस्य प्रथमं निरूपणं विशेषतः अभिनवगुप्तपादस्य **शान्तस्य सर्वप्रकृति-त्वाभिधानाय पूर्वमभिधानम्** इति मतस्य उपजीव्यतांदाति।

४. अग्निपुराणं स्वीये काव्यशास्त्रीयभागे साङ्गोपाङ्गं सविस्तरं

---

१. तत्रैव १, ४, ८-९।
२. महाभा० आश्वमेधिकपर्वणि अ० ६९।
३. तत्रैव शान्तिपर्वणि अ० १५३।
४. विष्णुधर्मोत्तरे ३, १४,-३१ अध्यायेषु।
५. द्र० काव्यात्ममीमांसापरिशिष्टम्।

काव्यशास्त्रं प्रतिपादयति। तत्रत्या रसविषयिका चर्चा पूर्वं विशदं कृतेति नेह वितन्यते। रसस्वरूपं, तन्निष्पत्तिविधानं, तद्भेदप्रभेदाः, रतिशृङ्गारस्य प्रामुख्यञ्चेत्यादिविषया तत्र सर्वे प्रदर्शिताः।

५. अनुयोगद्वारसूत्रे जैनग्रन्थे वीरशृङ्गाराद्भुतरौद्रव्रीडनक-बीभत्सहास्यकरुणप्रशान्तानां नवानां काव्यंरसेषु[1] व्रीडनकनामा रसः नवीनतां भजते। अयं हि रसः।

विनयोपारगुह्यगुरुदारमर्यादाव्यतिक्रमोत्पन्नः।
व्रीडनको नाम रसो लज्जाशङ्काकरुणलिङ्गः॥

व्रीडनकरसं व्याचक्षाण[2]: मलधारी हेमचन्द्रः प्रतिपादयति- व्रीडयति लज्जामुत्पादयतीति लज्जनीयवस्तुदर्शनादिप्रभवो मनोव्य-लीकतादिस्वरूपो व्रीडनकः। अस्य स्थाने भयजनकसंग्रामादिवस्तु-दर्शनादि प्रभवो भयानको रसः पठ्यतेऽन्यत्र, स चेह रौद्ररसान्त-र्भावविवक्षणात् पृथङ्नोक्तः इति।[3]

एतत् प्रसङ्गे शृङ्गम् इयर्ति इति शृङ्गारः इत्येवं शृङ्गारशब्दं व्युत्पादयन् मलधारी शृङ्गाररसस्य कमनीयत्वं सर्वप्रकर्षशालित्वञ्च प्रतिपादयति।

(६) आचार्यभामहः अलङ्कारसम्प्रदायप्रतिष्ठापकः सन्नपि, वक्रोक्तिरेव काव्यानां परा भूषेति मन्वानोऽपि, काव्यजीवितरूपाम् अतिशयोक्त्यभिधानां वक्रोक्तिमेव काव्यविच्छित्तिजानिकां मन्यमानोऽपि-

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलंङ्कारोनया विना।[4]

---

१. णव कव्वरसा पण्णत्ता, तं जहा वीरो सिंगालो अब्बुओ अरोद्दो अहोतु बोद्धव्वो। बेलणओ बीभच्छो हासो कलुणो पसंतो अ।। अनुद्वारसूत्रगाथा ६३।

२. संस्कृतच्छाया तत्रैव।

३. तत्रैव व्याख्या।

४. भामहालङ्कारे २, ८५।

इति समुद्घाट्य वक्रोक्त्या अर्थस्य विभावनं रसमयीकरणं मन्यते। अत एव अभिनवगुप्तपादाचार्यः विभाव्यते प्रमदोद्यानादिभिर्विभावतां नीयते विशेषेण च भावयते रसमयीक्रियते इत्येवं रूपेण व्याचचक्षे।

महाकाव्यस्वरूपं प्रतिपादयन् भामहः **रसैश्च सकलैः पृथक्**[१] इति सकलैः रसैः संयुक्ते परिपुष्टे सत्येव महाकाव्यत्वं जायते इति निश्चिनोति। भामहः रसादीनां स्पष्टतः प्रतिपादने रसवत्,[२] भावादीनां प्रतिपादने प्रेयः,[३] उत्साहादिप्रदर्शने ऊर्जस्वि इत्यलङ्कारत्रयं निरूप्य अलङ्कारमुखेन रसादीन् आस्वादयतीत्यमन्यत।

एवञ्च **न कान्तमपि निर्भूषं विभाति वनिताननम्।**[४]

इति स्वीकुर्वाणोऽपि भामहः

**स्वादु काव्यरसोन्मिश्रं शास्त्रमप्युपञ्जते।**
**प्रथमालीढमधवः पिबन्ति कटुभेषजम्॥**[५]

इत्यादिना काव्ये रसस्य महत्त्वमङ्गीकरोत्येव।

(७) आचार्यदण्डी काव्यादर्शे–

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति॥**[६]

इत्येवं रूपेण काव्यशोभासम्पादकान् धर्मानलङ्कारान् मन्यमानः

---

१. तत्रैव १, १९।
२. रसवद्दर्शितस्पष्टशृङ्गारादिरसं यथा। तत्रैव ३, ६।
३. प्रेयो गृहागतं कृष्णमवादीद् विदुरो यथा।
अद्य या मम गोविन्द जाता त्वयि गृहागते॥
कालेनैषा भवेत्प्रीतिस्तवैवागमनात् पुनः॥ तत्रैव ३, ५।
(द्र० महा० उद्योगप० ८९, २४)
४. तत्रैव १, ६।
५. तत्रैव ५, ३।
६. काव्यादर्शे २, १।

अलङ्कारकुक्षौ च

यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।
व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः॥[१]

इति कथयन् नाट्यशास्त्रोक्तानि सन्धिसन्ध्यङ्गानि, वृत्ति-वृत्यङ्गनानि, लक्षणादीनि च संगृह्णन् सर्वेषु शोभाकरधर्मेषु अलङ्कारत्वमेव स्वीचकार भोजराजानुसारं दण्डी एतस्मिन्नलङ्कारे श्लेषोपमादिवत् गुणरसभावतदाभासप्रशमादीनप्यनुगृह्णाति मार्गविभागकृद्गुणानामलंक्रियात्वोपदेशेन श्लेषादीनां गुणानामिव अलङ्कारत्वंमपि ज्ञापयति।[२] एवं हि दण्डी अलङ्कारस्य व्यापकतां महत्ताञ्च स्वीकुर्वाणोऽपि

प्रेयः प्रियतराख्यानं रसवद्रसपेशलम्।
ऊजस्वि गूढालङ्कारं युक्तोत्कर्षं च तत्त्रयम्॥[३]

युक्तोत्कर्षत्वं प्रतिपादयन् वस्तुतो रसभावादीनामेव महत्त्वं प्रकटति रसवदलङ्कारनिरूपणप्रसङ्गे च शृङ्गाररौद्रवीरकरुणबीभत्सहास्याद्भुतभयानकरसान् सर्वान् सोदाहरणान् प्रतियादयति। तथा च–

मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः।
येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः॥[४]

कामं सर्वोऽप्यलङ्कारो रसमर्थे निषिञ्चति॥[५] इत्यदिना काव्ये रसयोजनमावश्यकं मनुते।

(८) आचार्य उद्भटः रसवदाद्यलङ्कारान्तर्गततया रसादीनां निरूपणं विदधानः अलङ्कारसम्प्रदायपथमनुसरन्नपि

---

१. तत्रैव २, ३६९।
२. सरस्वतीकण्ठाभरणे पृ० ६१२
३. काव्यादर्शे २, २६५
४. तत्रैव १, ५१
५. तत्रैव २, २८१।

रत्यादिकानां भावानामनुभावादिसूचनैः।
यत् काव्यं बध्यते सद्भिस्तत् प्रेयस्वदुदाहृतम्।।

रसवत् दर्शितस्पष्टशृङ्गारादिरसोदयम्।
स्वशब्दस्थायिसञ्चारिविभावाभिनयास्पदम्।।[१]

इत्यादिना प्रेयस्वद्रसवदूर्जस्विसमाहितालङ्कारेषु नवानां शान्तसहित-शृङ्गारादिरसानां, रत्यादिभावादीनाञ्च प्रतिपादनं व्यधात्। एतन्मते च शृङ्गारादिशब्दैः, रत्यादिस्थायिभावैः, निर्वेदादिसञ्चारिभिः, आलम्बनो-द्दीपनविभावैः, आङ्गिकवाचिकाहार्यसात्त्विकरूपै रसकार्यभूतैश्चतुर्भिर-भिनयैश्च रसः प्रतिपाद्यते।

एवञ्च उद्भटाचार्यः स्वकीये काव्यालङ्कारसारसंग्रहे रसभावादीन् विस्तरेण प्रतिपाद्य रसविषयकं विचारं प्रकटयामास।

९. आचार्यवामनः गुणविशिष्टपदरचनात्मिकाया रीतेरात्मत्वं स्वीकुर्वाणः **दीप्तरसत्वं कान्तिः**[२] इति कान्तिगुणं परिभाषमाणः शृङ्गारादिरसानां प्रकाशनात् कान्तिगुणस्य गुणत्वं स्वीचकार। एतेन कान्तिगुणस्य अङ्गतया सरसास्वादमकोत्।

१०. आचार्यरुद्रटः स्वकीये काव्यालङ्कारे यथाविस्तरेण विभावानुभावव्याभिचारिभावप्रदर्शनपूर्वकं सोदाहरणं।

शृङ्गारवीरकरुणबीभत्सभयानकाद्भुताहास्यः।
रौद्रः शान्तः प्रेयान् इति मन्तव्या रसाः सर्वे।।[३]

इति समेषां दशानां रसानां वर्णनं व्यधात् तथा न केवलमलङ्कार-सम्प्रदायाचार्यग्रन्थेषु अन्यत्र दुर्लभायते, अपि तु रसध्वनिसम्प्रदाया-

---

१. काव्यालङ्कारसारसंग्रहे ४, २-३।
२. शृङ्गारहास्यकरुणरौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नव नाट्ये रसाः स्मृताः ।। तत्रैव ४, ४।
३. काव्यालङ्कारसूत्रवृत्तौ ३, २, १४।
४. रुद्रटालङ्कारे १२, १३।

चार्यकृतिष्वपि विरलायते एव। अयं हि शृङ्गारस्य प्रथमं सम्भोगविप्रलम्भौ भेदद्वयं प्रदर्श्य विप्रलम्भस्य पुनः प्रथमानुरागामानप्रवासकरुणरूपान् चतुरो भेदान् प्रदर्शयामास। रूपकमिव काव्यमपि महता यत्नेन रसैर्योजनीयमिति निर्दिशन् रुद्रटः रसा न केवलं नाट्ये, अपि तु काव्येऽपि तथैव काम्या भवन्तीति प्रत्यपादयत्।[१]

**रसनाद् रसत्वमेषां मधुरादीनामिवोक्तमाचार्यैः।**
**निर्वेदादिष्वपि तन्निकाममस्तीति तेऽपि रसाः॥[२]**

इति रसनाद् यथा रसत्वं रत्यादीनां भवति, तथैव निर्वेदादि-व्यभिचारिणामपि रसनाद् रसत्वं भवतीति रसविषये अयं नवीनविचारं प्रदर्शयामास।

इत्थं रसविचारं विधायापि रुद्रटः अलङ्कारसम्प्रदायस्यैवाचार्य इत्यस्य कारणन्तु इदमेव यदयं भावालङ्कारे प्रतीयमानमर्थमन्तर्भावयति तथा रसाः काव्यस्य, शरीरस्य सौन्दर्यादय इव, सहजा गुणा इति सिद्धान्तयति। रुद्रटालङ्कारस्य प्रसिद्धटीकाकारेण नमिसाधुना आचार्यस्य सिद्धान्तं प्रदर्शयता प्रोक्तम्– **अर्थालङ्कारमध्ये रसा अपि किन्नोक्ताः। उच्यते, काव्यस्य हि शब्दार्थौ शरीरम्। तस्य च वक्रोक्तिवास्तवादयः कटककुण्डलादय इव कृत्रिमा अलङ्काराः। रसास्तु सौन्दर्यादय इव सहजा गुणा इति भिन्नस्तत् प्रकरणारम्भः।[३]** इति

११. रुद्रभट्टः स्वीये शृङ्गारतिलके–

**प्रायो नाट्यं प्रति प्रोक्ता भारताद्यै रसस्थितिः।**
**यथामति मयाप्येषा काव्यं प्रति निगद्यते॥[४]**

इति प्रतिपादयन् काव्यं प्रत्यपि रसस्थितिरावश्यकीति रुद्रटमतं समर्थयामास।

---

१. तस्मात् तत् कर्तव्यं यत्नेन महीयसा रसैर्युक्तम्॥ रुद्रटा० १२, २।
२. तत्रैव १२, ४।
३. तत्रैव १२, २, कारिकायां नमिसाधोष्टीका।
४. शृङ्गारतिलके १, ५।

(१२) ध्वनिसम्प्रदायप्रतिष्ठापकः आनन्दवर्धनाचार्यः विरोधिमत-खण्डनपुरस्सरं काव्यस्यात्मा ध्वनिरिति मतं संस्थाप्य ध्वनेः वस्त्वलङ्कार-रसादभेदेन त्रैविध्यं प्रतिपाद्य विवक्षितान्यपरवाच्यध्वनेः असंलक्ष्यक्रम-व्यङ्ग्यरूपभेदे रसभावरसाभासभावाभासभावशान्तिभावोदयभावशबलतानां निरूपणं व्यधात्। ध्वन्यमानरूपो रसादिः काव्यस्यात्मेति स्वमतं समर्थयन्-

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुराः।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥**

इति महर्षिवाल्मीकेरादिकाव्यरामायणस्यरचनाप्रसङ्गं स्मारयामास। एतेन प्रतीयमानो रसादिरेव काव्यस्यात्मेति मतं तस्य प्रकटितं भवति। अत आनन्दवर्धनाचार्यमते यथा आत्मोत्कर्षकतयैव गुणालङ्कारसंघटनानां शरीरे समुचितविधानेन महत्त्वं भवति, तथैव काव्येऽपि गुणालङ्कारसंघटनादयः ध्वन्यमानरसादेरात्मनः समुत्कर्षकतया औचित्येन संयोजिताः कामपि विच्छित्तिमादधाना महत्त्वं प्राप्नुवन्ति। अतश्च ध्वन्यमानरसादिः वस्तुतो ध्वन्यमान एव रसो रसा भवतीति रसादेः प्राधान्यं काव्ये सिद्धं भवति। रसप्रसङ्गे च ध्वन्यालोके शान्तिसहिताःशृङ्गारादयो नव रसाः सुचर्चिताः सन्ति।

१३. आचार्यकुन्तकः वैदग्ध्यणितिस्वरूपा वक्रोक्तिः काव्य-जीवितमिति मन्यमानोऽपि

**निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।[३]**
**गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः॥**

इत्युद्दिशन् रसस्य महत्त्वं मुक्तकण्ठं स्वीकुर्वन् काव्ये साध्यरूपस्य रसस्य साधनतयैव प्रायः विच्छित्तिजनिकाया वक्रोक्तेः प्रतिपादनं वक्रोक्तिजीविते अकरोत्।

१. रस-भाव-तदाभास-तत्प्रशान्त्यादिरक्रमः।
ध्वनेरात्माङ्गिभावेन भासमानो व्यवस्थितः॥ ध्वन्या० २, ३।

२. तत्रैव १, ५।

३. वक्रोक्तिजीविते ४, ११।

१४. रसोत्पत्तिवादिनो भट्टलोल्लटस्य,

१५. रसभुक्तिवादिनो भट्टनायकस्य,

१६. रसानुमितिवादिनः श्रीशङ्कुकस्य,

१७. रसाभिव्यक्तिवादिनोऽभिनवगुप्ताचार्यस्य च मतानि मम्मटाचार्यस्य रसविषयकविचारप्रसङ्गे प्रदर्शयिष्यन्ते।

१८. यायावरीयो राजशेखरः काव्यं मीमांसमानः काव्यपुरुषस्य **रस आत्मा**[१] इति सर्वान् संबोधयामास। ततश्च रसात्मना भासमानः काव्यपुरुषः साहित्यविद्यावधूमङ्गलावहपाणिं जग्राह। काव्यरसिकश्च परम- प्रमोदमन्वभवत्।

१९. प्रतीहारेन्दुराजः उद्भटकाव्यालङ्कारसारसंग्रहस्य लघुवृत्तौ शब्दार्थशरीररूपकाव्यस्य **रस आत्मा** अस्तीति सिद्धान्तयन् स्पष्टं प्राह–

**'न खलु काव्यस्य रसानां चालङ्कार्यालङ्कारभावः किन्त्वात्म- शरीरभावः। रसा हि काव्यस्यात्मत्वेनावस्थिताः शब्दार्थौ च शरीररूपतया। यथा ह्यात्माधिष्ठितं शरीरं जीवतीति व्यपदिश्यते, तथा रसाधिष्ठितस्य काव्यस्य जीवद्रूपतया व्यपदेशः क्रियते। तदाहुः**

**रसाद्यधिष्ठितं काव्यं जीवद्रूपतया यतः।**
**कथ्यते तद्रसादीनां काव्यात्मत्वं व्यवस्थितम्॥[२] इति।**

२०. रसानुमितिवादी आचार्यमहिमभट्टः मुक्तकण्ठमुद्घोषतेयत् **काव्यस्यात्मनि रसादिरूपे न कस्यचिद् विमतिरिति। स तु**

---

१. काव्यमीमांसा पृ० १४।

२. काव्यालङ्कारसारसंग्रहलघुवृत्तिटीका पृ० ८३।

३. व्यक्तिविवेके पृ० २२।

रसादेर्ध्वन्यमानत्वं खण्डयितुम् अनुमाने रसादिरूपमर्थमन्तर्भावायितुं व्यक्तिविवेकं कुरुते इति।[१]

कथयति च-

**रसस्य आत्मरूपपरमसत्तायां तस्य विमतिर्नास्ति इति।**

२१. दशरूपककृद् धनञ्जयः भरतनाट्यशास्त्रस्य सरणिमनुसरन्

**विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।**
**आनीयमानः स्वादुत्वं स्थायी भावो रसः स्मृतः।।**[२]

इत्येवं प्रतिपादयन् विभावादिभिः स्वादुत्वमानीयमानः स्थायिभावात्मको रसः केवलं रसिकसामाजिकस्यैव आनन्दाय प्रभवति न तु अनुकार्यानुकारकयोः प्रमोदाय जायते। भूतकालिकदुष्यन्तशकुन्तलाद्यनुकार्यस्य इदानीमविद्यमानतया अनुकार्यस्य रसोद्रेको नैव सम्भाव्यते। अपरञ्च कविः काव्यनाटकादेः रचनां सहृदयस्यैव कृते करोति, न तु अनुकार्यस्य कृते। एवमेव अनुकर्तृनटगतमपि रसास्वादं स्वीकर्तुं न शक्यते। तथा सति सामाजिकस्य किं प्रयोजनं सिध्येत्। अतः अनुकार्यविभावैः अर्थात् अनुकूलैर्हर्षरोमाञ्चादिव्यभिचारिभिः परिपुष्टः, परित्यक्तदुष्यन्तत्वादिविशेषेण साधारण्येनैव प्रतीतः,[४] सामाजिकनिष्ठः स्थायी रत्यादिभावः यो हि तदानीमास्वाद्यो भवति स एव रसिकगतो रस इति निष्कर्षः अत्रोदमाशङ्क्ते–

(क) परित्यक्तभगवद्रूपविशेषसाधारण्येन समान्यनायकरूपेण प्रतीते श्रीरामे समादरो न भवेत्।

---

१. अनुमानेऽन्तर्भावं सर्वस्यैव ध्वनेः प्रकाशयितुम्।
व्यक्तिविवेकं कुरुते प्रणम्य महिमा परां वाचम्।। तत्रैव पृ० १।

२. दशरूपके ४, १०।

३. तत्रैव ४, ३८-३९।
धीरोदात्ताद्यवस्थानां रामादिप्रतिपादकः।
विभावयति रत्यादीन् स्वदन्ते रसिकस्य ते।। तत्रैष ३, ४१।

४. ता एव च परित्यक्तविशेषा रसहेतवः।। तत्रैव ४, ४१।

(ख) साधारणरूपेण प्रतीतस्य श्रीरामस्य भगवद्रूपेण प्रदर्शनं, काव्ये वर्णनं वा निष्प्रयोजनं स्यात्।

प्रश्नद्वयं निराकुर्वन् धनञ्जयः समाधत्ते–**यथा हि मृण्मयैर्गजादिभिः** सह क्रीडन्तो बालाः सत्यरूपान् तान् मन्यमानाः प्रमोदमनुभवन्ति तथैव चित्रतुरगन्यायेन सामाजिका अपि तेषु रामादिषु वास्तविकताया प्रतीतिं कुर्वन्तः रसानन्दमास्वादयन्ति इति।[१]

काव्यार्थपरिशीलनाज्जायमानोऽयमात्मानन्दास्वादः चित्तस्य विकास विस्तरक्षोभविक्षेपैः चतुर्विधो भवति। तेन विकासात् श्रृङ्गारहास्यौ विस्ताराद्वीराद्भुतौ क्षोभाद्वीभत्सभयानकौ विक्षेपाच्च रौद्रकरुणौ इत्यष्टौ रसा[२] भवन्ति। शमस्य नाट्ये पुष्ट्यभावात् शान्तस्तत्र न भवति।[३] **काव्याद् रसास्वादे धनञ्जयेन भाव्यभावकसम्बन्धः स्वीक्रियते।**

(२२) भोजराजः सरस्वतीकण्ठाभरणे शृङ्गारप्रकाशे च दशानां रसानां प्रतिपादनप्रसङ्गे **रससंयोजनादेव काव्ये कमनीयत्वम्, अहङ्कार रूपस्य शृङ्गारस्य मूलरसत्वं, रसनाद् रसत्वमित्यादिविषयाणां** विस्तरेण निरूपणमकरोत्। काव्ये रसस्यैव सर्वाधिकं महत्त्वममन्यत। रसस्य प्रकृति-विकृतिभावविचारप्रसङ्गे इमे विषयाः पूर्वचर्चिताः अतो नात्र पुनश्चर्चामपक्षन्ते।

(२३) ध्वनिप्रस्थापनपरमाचार्यो मम्मटः स्वकीये निदर्शनीभूते काव्यप्रकाशे रसविषये यं सिद्धान्तं स्थापयामास प्रायेण परवर्तिन आचार्याः तमेव अनुसरन्तः रसविषयकं विचारं प्रत्यपादयन्।

तत्र रसस्वरूपं निर्दिशन् मम्मटः प्राह।

**कारणन्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥**
**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः**[४]॥ इति

---

१. क्रीडतां मृण्मयैर्यद्वद् बालानां द्विरदादिभिः।
सोत्साहस्वदते तद्वच्छ्रोतृणामर्जुनादिभिः॥ तत्रैव ४, ४२।

२. तत्रैव ४, ४३-४४।

३. तत्रैव ४, ३५।

४. काव्यप्रकाशे ४, २६-२७।

अर्थाल्लोके अविच्छिन्नप्रवाहस्य रत्यादिभावस्य यानि कारणानि ललनादिरूपाणि, यानि च रत्यादिभावस्य कार्याणि कायिकवाचिक-मानसिकभेदेन नानाविधानि कटाक्षकाकूक्तिरोमाञ्चादीनि, यानि च तस्य सहकारीणि सहायकानि लज्जाप्रभृतीनि तान्येव कारणकार्यसहकारीणि यदि नाट्यकाव्ययोर्वर्ण्यन्ते तानि क्रमेण विभावा अनुभावास्तथा व्यभिचारिण इति कथ्यन्ते। तैश्च विभादिभिः प्रक्रियाविशेषैर्व्यञ्जनाव्यापारेण रत्या-दिस्थायिभावः अभिव्यज्यते-**सामाजिकसहृदयहृदयस्थः स्थायिभावः प्रकाश्यते**-तर्हि स एव स्थायी रस इत्युच्यते।

सुखदुःखशोकादिविभिन्नस्वभावा अपि स्थायिभावा यदा विभावादिभिर्व्यञ्जिता भवन्ति तदाते विशेषप्रक्रियया आनन्दस्वरूपा ब्रह्मास्वादसहोदरा एव भवन्ति इत्यत्र विशेषः।

मम्मटोक्तं स्पष्टमपि रसस्वरूपं विद्याधरः तद् व्याचक्षाणः अधिकं सुस्पष्टयति। तद्यथा-**विभावैर्ललनादिभिरालम्बनकारेणैरङ्कुरितः, सित- करकोकिलालापमलयानिलकेलिकाननादिभिरुद्दीपनकारणैः कन्दलितः, अनुभावैर्नयनान्तावलोकितस्मितभुजवल्लीवेल्लनादिभिः प्रतीतिपद्धतिमध्यारोपितः, व्यभिचारिभिश्चिन्तादिभिः पल्लवितः, कदाचिदपि नानुभूतोऽभिधया, न कर्णातिथीकृतस्तात्पर्येण, न लक्ष्यीकृतो लक्षणया, न स्वविषयं प्रापितः प्रत्यक्षेण, नात्मनः सीमानमानीतोऽनुमानेन, अपरिशीलितसरणिः स्मरणेन, नाक्रान्तः कार्यतया, न ज्ञातो ज्ञाप्यतया, विगलितवेद्यान्तरत्वेन परि-मितावनधीती, ध्वननाभिधानाभिनवव्यापार परिरम्भनिर्भरतया अनुकार्यानुकर्तृगतत्वपरिहारेण सामाजिकानां वासनात्मतया स्थितः, स्थायी रत्यादिको भाव एव विभावादिजीवितावधिः, पानकर-सन्यायेन चर्व्यमाणैकप्राणः समुल्लसन् ब्रह्मास्वादसब्रह्मचारी लोकोत्तरचमत्कारकारी शृङ्गारादिको रसोऽभिधीयते**[1]।

---

१. एकावल्याम् पृ० ८७-८८।

एवं हि अलौकिको विलक्षणो रसः दर्शकेन नाटकादिदर्शनात् काव्यरसिकेन च काव्यानुशीलनात् कथमनुभूयते इति गूढं प्रश्नं समादधत् महामुनिर्भरतः नाट्यशास्त्रे प्राह-

**विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः[1]।**

सूत्रमिदं स स्वयमपि इत्थं व्याचष्टे।

**(क) यथा नाना व्यञ्जनौषधिद्रव्यसंयोगात् रसनिष्पत्तिः तथा नानाभावोपगमाद् रसनिष्पत्तिः। यथा गुडादिभिर्द्रव्यैर्व्यञ्जनै-रौषधिभिश्च षड्रसा निर्वर्त्यन्ते, एवं नानाभावोपहिता अपि स्थायिनो भावा रसत्वमाप्नुवन्ति[2]। यथा हि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषाः हर्षादीश्चाप्यधिगच्छन्ति, तथा नाना भावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः।**

अत्र मुनिव्याख्याने दृष्टान्ते नानाद्रव्यसंयोगात् अर्थात् संमिश्रणात् षड्रसा निष्पाद्यन्ते, पुरुषास्तानास्वादयन्तो हर्षादीनधिगच्छन्तीति संयोगार्थो यथा बोधगम्यो भवति, दार्ष्टान्तिके नानाभावसंयोगात् उपगमान् मिलनात् शृङ्गारादयो रसा निष्पन्ना भवन्ति तथा तानास्वादयन्तः प्रेक्षका आनन्दमनुभवन्तीति मुनिभरतैकगम्यः संयोगार्थः अस्मदादीनां बुद्धिगम्यो न भवतीति मनीषिणः रससूत्रस्थं संयोगादिति पदं विभिन्नप्रकारेण विवृण्वते। तत्र प्रादुर्भूतो विवादो रसविषयकः। तथा हि

**(ख) भट्टलोल्लटस्य उत्पत्तिवादः**

भट्टलोल्लटानुसारं शकुन्तलारूपालम्बनविभावेन उपवनरूपोद्दीपन-विभावेन उत्पन्नः, कटाक्षाद्यनुभावेन प्रतीतियोग्यः, लज्जादिव्यभिचारि-भाव परिपुष्टः दुष्यन्तगतो रतिस्थायिभावः वस्तुतो दुष्यन्तरूपानुकार्ये एव

---

१. नाट्यशास्त्रे पृ० ७१।
२. तत्रैव पृ० ७१।
३. नाट्यशास्त्रे पृ० ७१

उत्पद्यते, किन्तु यदा निपुणोऽनुकारको नटोऽभ्यासात् तदनुरूपेण दष्यन्तस्याभिनयं करोति तदा तस्मिन् नटेऽपि दुष्यन्तनिष्ठरतिभावस्य प्रतीतिर्भवति यं नटमवलोक्य सामाजिकोऽपि तमानन्दमनुभवति। अयमत्राशयः – यथा हि शुक्तौ रजते अविद्यमानेऽपि भ्रमात् तत्र रजतत्वेन ज्ञाते सति ज्ञाता तद्ग्रहीतुं प्रवृत्तो भवति, दृष्ट्वा च पुलकितो भवति, तथैव अनुकर्तरि नटे वास्तविकदुष्यन्ते अविद्यमानेऽपि दुष्यन्तरूपेण तत्र प्रतीतौ दुष्यन्तनिष्ठरतिभावस्य आनन्दानुभवं करोति सामाजिकः। एवं हि विभावादिना सह रसस्य उत्पाद्योत्पादकभावसम्बन्धो भवति तथा च रससूत्रस्य संयोगादित्यस्य उत्पाद्योत्पादकभावसम्बन्धादित्यर्थो जायते।

दुष्यन्तरूपानुकार्ये मुख्यतया वस्तुतः समुत्पन्नो रसः गौणतया भ्रमात् अनुकर्तरि नटे प्रतीयमानोऽपि प्रेक्षकेण सह असम्बद्धः सन् तद्धृदये कथमानन्दं जनयेदिति मतेऽस्मिन् असङ्गतिमवलोकयन्तः समालोचका मत मिदं तिरस्कुर्वन्ति[1]।

## (ग) श्रीशङ्कुकस्यानुमितिवादः

श्रीशङ्कुकानुसारंरङ्गमञ्चस्थे दुष्टान्तस्याभिनयं कुर्वति अनुकर्तरि नटे दुष्यन्तस्य या प्रतीतिर्भवति सा सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो भिन्ना, चित्रतुरगन्यायेन विलक्षणा प्रतीतिर्भवति। यथा हि चित्रे तुरगस्य ज्ञानं न यथार्थज्ञानम्, उत्तरकाले बाधाभावात् नैव मिथ्याज्ञानं, नैव तत्र संशयः, नापि सादृश्यात्मकं ज्ञानं, तथैव नटे दुष्यन्तस्य यथार्थं ज्ञानं नास्ति, यतो हि तद्वति तत्प्रकारकं ज्ञानमेव यथार्थज्ञानं भवति। एवं सत्यपि इदं ज्ञानं मिथ्याज्ञानमपि नास्ति, यतस्तज्ज्ञानस्य उत्तरकाले बाधो न भवति। अर्थात् यावत् कालपर्यन्तं प्रेक्षकः दुष्यन्ताभिनयं प्रेक्षते तावत्कालपर्यन्तं न दुष्यन्तोऽयमित्याकारकं मिथ्याज्ञानं न जायते। तत्र अयं दुष्यन्तो न वा इति संशयोऽपि न भवति। नैव दुष्यन्तसदृशोऽयम् इति सादृश्यज्ञानं वर्तते। एवञ्च सम्यङ्मिथ्यासंशयसादृश्यप्रतीतिभ्यो विलक्षणया प्रतीत्या ज्ञाते

---

१. द्र० काव्यप्रकाशरसनिष्पत्तिप्रकरणम्।

कृत्रिमे नटे अनुभावव्यभिचारिभावा अपि कृत्रिमा विलक्षणा एव भवन्ति। किन्तु शिक्षाभ्यासवशात् अनुकर्ता नटः तथाभिनयं करोति येन कृत्रिम-कारणकार्यसहकारीणि स्वाभाविकानि सन्ति विभावानुभावव्यभिचारिभाव-व्यपदेश्यानि भवन्ति। एतेषामेव विभादीनां संयोगात्साध्यसाधक-भावरूपात् अनुमाप्यानुमापकभावसम्बन्धात् नटे रत्यादीनां निष्पत्तिरर्थादनुमितिर्भवति। प्रेक्षकस्तस्मिन्नटे **दुष्यन्तोऽयं शकुन्तला-विषयकरतिमान् शकुन्तलाद्यात्मकविभावादिसम्बन्धित्वात् शकुन्तला विषयककटाक्षादिमत्त्वाद्वा। यो नैव स नैवं यथाऽहम्** इत्यादिरूप-मनुमानं करोति। एवं हि अनुमीयमानोऽपि रत्यादिभावः रतिरूपवस्तु-सौन्दर्यात् अन्यानुमीयमानपदार्थाद् विलक्षणो भवति, येन परोक्षात्मिकापि अनुमितिः प्रकृते प्रत्यक्षात्मिका रसानुमितिर्भवति। एतेनैव वैलक्षण्येन सामाजिकः नटे वस्तुतोऽविद्यमानाया अपि रतेः रसरूपेण अनुमित्यात्मकमास्वादं करोति[१]।

यथा कुत्रापि वास्तविकधूमस्य असत्त्वेऽपि धूमत्वेन ज्ञाततया तत्र धूमनियतवह्नेरनुमानं भवति, तथैव नटे वास्तविकविभावादीनां सत्त्वेऽपि नटाभिनयेन प्रतीतैः विभावादिभिः रतेरनुमानं भवति। अनुमिता चासौ रतिः स्वसौन्दर्यबलात् सामाजिके आस्वाद्यमाना रसत्वं प्राप्नोति। सैवेयं रसानुमितिः रसनिष्पत्तिरिति सारांशः।

परमिदमपि मतं विवेचकेभ्यो न रोचते। तथा हि नटरूपे दुष्यन्तपक्षे दुष्यन्तत्वं सिद्धं नास्ति। यानि अनुभावव्यभचारिभावादीनि साधनानि सन्ति तान्यपि कल्पितान्येव सन्ति। अतः कल्पितपक्षे कल्पितसाधनैर्या रतिः साध्यते सापि संभावितैव स्यात्। परोक्षात्मिकाया अनुमितेः साक्षात्कारात्मकानुभूतिरूपत्वमपि न्यायसङ्गतं नास्ति यतो हि प्रत्यक्षमेव ज्ञानं चमत्कारजनकं नानुमित्यादि इत्येव नियमः। अपरञ्च पूर्वोक्तानुमाने यथाऽहमिति व्यतिरेकिदृष्टान्तेन सामाजिक एव व्यतिरेकिकोटौ समापतति।

---

१. द्र० काव्यप्रकाशरसप्रकरणम्।

एवं हि सामाजिकातिरिक्तः को हि तद्रसानुभूतिं कुर्यात्? अनुमितिं विनापि रसमहं साक्षात्करोमि इत्यनुव्यवसायः रसस्यानुमेयत्वं निराकरोति। एवञ्च विविधाभिरापत्तिभिः रसानुमानं न शक्यसम्भवम्।

### (घ) भट्टनायकस्य भुक्तिवादः

भट्टनायकानुसारेण रसो नोत्पद्यते, न प्रतीयते, नाभिव्यज्यते, अपि तु भोजकत्वव्यापारविशेषेण भुज्यते। अनुकार्यानुकारकसामाजिकेषु त्रिषु अनुकार्यदुष्यन्तादिगतत्वेन तदानीं रसस्य उत्पत्तिः प्रतीतिर्वा न सम्भाव्यते, अनुकार्यदुष्यन्तादेर्भूतकालिकत्वात्। अनुकारकनटादिगतत्वेनापि रसोत्पत्तिं तत् प्रतीतिं वा स्वीकर्तुं न शक्यते, तथात्वे सामाजिकस्य कृते रसोत्पत्तेः प्रतीतेर्वा निष्प्रयोजनत्वात्। सामाजिकगतत्वेनापि रसोत्पत्तिमङ्गीकर्तुं न शक्यते, यतः शकुन्तलादिविभावः दुष्यन्तं प्रति विद्यते न तु सामाजिकं प्रति। साधारणीकरणेन शकुन्तलादिविभावः स्वं विशिष्टं रूपं परिहाय सामान्यनायिकारूपेण हृदिस्थो भवति। तादृशविभावेन सामाजिकः रसानुभूतिं कर्तुमर्हतीति न शङ्कनीयम्। अथवा रङ्गमञ्चस्थं शकुन्तलादि-रूपं विभावं समवलोक्य सामाजिकः स्वकान्तां संस्मृत्य तद्द्वारा रसानुभूतिं करोतीत्यपि असङ्गतम्, यतः देवतादिवर्णनस्थले सीतारामाद्यभिनयस्थले वा सीतादौ देवतात्वबुद्ध्या साधारणीकरणं सम्भवं नास्ति। यस्य स्वकान्ता नास्ति, नासीद्वा तस्य स्वकान्तास्मरणमेव न सम्भाव्यते। अतो रसस्य स्वगतत्वेन परगतत्वेन वा उत्पत्तिः प्रतीतिर्वा न भवितुमर्हति।

एवमेव रसस्याभिव्यक्तिरपि भवितुं नार्हति, यतः पूर्वतो विद्यमानस्यैव वस्तुनोऽभिव्यक्तिर्भवति। रसस्तु तदानीं सामाजिकैरनुभूयते। अनुभवात् पूर्वं पश्चाच्च रसस्यास्तित्वमेव नास्ति, अतो रसस्य उत्पत्तिः प्रतीतिरभिव्यक्तिर्वा न जायते[१]।

---

१. ध्वन्यालोके २, ४ कारिकायाम् अभिनवगुप्तस्य लोचने पृ० ८२

एवं सति भट्टनायकः स्वयमेव रसास्वादप्रक्रियामित्थं दर्शयति--सुकविप्रयुक्तकाव्यशब्दस्य अभिधायकत्वभावकत्वभोजकत्व-रूपत्र्यंशताप्रसादात् अन्यशब्देभ्यो वैलक्षण्यं भवति। तत्र **अभिधायकत्व-रूपप्रथमव्यापारेण काव्यार्थबोधो** भवति। **भावकत्वरूपद्वितीयव्यापारेण** रसादिविषयकेण काव्यार्थविभादीनां **साधारणीकरणं** जायते। एवं साधारणीकृते रत्यादौ **भाविते** सति तृतीयेन सहृदयविषयकेण **भोजकत्व-व्यापारेण** तस्य भावितरसस्य भोगः आस्वादो भवति। यो हि आस्वादः अनुभव- स्मृतिभ्यां विलक्षणः चित्तस्य द्रुतिविस्तरविकासरूपः, रजस्तमोभ्यामस्पृष्टः सत्त्वमयः, निजचेतनस्वरूपः, आनन्दमयः, परब्रह्मा-स्वादसहोदरो भवति[१]।

परमिदमपि मतं निराकुर्वन्तः अभिनवगुप्तपादादयः प्रतिपादयन्ति यत् काव्यजगति अप्रसिद्धयोर्भावकत्वभोजकत्वव्यापारयो रावश्यकत्वमेव नास्ति। अभिधाव्यापारात् परम् एकेनैव व्यञ्जनाव्यापारेण विभावादीनां साधारणीकरणंसाधारणीकृतभावितरत्यादेः अभिव्यञ्जनञ्च भवति। यथा हि एकेनैव प्रदीपेन तमोऽपनयनं, घटादेः प्रकाशनञ्च भवति, तथैव एकेन व्यञ्जनेन उभयमपि कार्यं सिद्ध्यति अतः **संयोगाद् रसनिष्पत्तिः** इत्यस्य भोज्यभोजकभावाद् रसभुक्तिरित्यर्थो न समीचीनः[२]।

### (ङ) अभिनवगुप्तस्य अभिव्यक्तिवादः

एतदनुसारेण लौकिकरसानुभूतेः कारणकार्यसहकारीणि यदा काव्य

---

१. किन्त्वन्यशब्दवैलक्षण्यं काव्यात्मनः शब्दस्य त्र्यंशताप्रसादात्। तत्राभिधायकत्वं वाच्यविषयं भावकत्वं रसादिविषयं भोक्तृत्वं सहृदयविषयमिति त्रयोंऽशभूता व्यापाराः। तेन रसभावनाख्यो द्वितीयो व्यापारः यद्वशादभिधा विलक्षणैव। तच्चैतद् भावकत्वं नाम यत् काव्यस्य तद् विभादीनां साधारणत्वापादनं नाम। भाविते च रसे तस्य भोगः योऽनुभवस्मरणप्रतिपन्नेभ्यो विलक्षण एव द्रुतिविस्तरविकासनामा रजस्तमो वैचित्र्याननुविद्धसत्त्वमयनिजचित्स्वभावनिर्वृतिविश्रान्तिलक्षणः परब्रह्मास्वादसचिवः। तत्रैव लोचने पृ० ८३।

२. द्र० काव्यप्रकाशरसप्रकरणम्।

नाट्ययोः विभावनानुभावनव्यभिचारणव्यापारैर्युक्तानि भवन्ति तदा ते विभावानुभावव्यभिचारिणः अलौकिका भवन्ति। एतेषामलौकिक-विभावादीनां साधारण्येन प्रतीतिर्भवति। अर्थात् इमे विभावाः परस्यैव न मम, ममैव न परस्य इत्यात्मिका परत्वात्मीयत्वबुद्धिस्तत्र न भवति। एतैः साधारण्येन प्रतीतैर्विभावादिभिः सहृदयहृदयस्था रत्यादिस्थायिभावाः अभिव्यञ्जिता भवन्ति। यथा हि पिहितमुखनिहितघटे प्रदीप्तो मणिः घटे अनावृते सद्यः प्रकाशते तथैव हृदिस्थो भावः विभादिद्वारा आवरणभङ्ग सति झटित्येवावभासते। स च भासमानो रत्यादिभावो रसाभिधानेन परमानन्दरूपतां धत्ते। सहृदया इमं रसानन्दमावादयन्ति। आस्वाद्यमानता अर्थात् आस्वाद एव रसस्यास्य स्वरूपनिष्पत्तौ निमित्तम्। विभावादिरेव अस्य जीवनसीमा। पानकरसवद् विलक्षणो रसास्वादोऽयं रसयितुः सर्वाङ्गम् आलिङ्गन् वेद्यान्तरं तिरोदधत्, ब्रह्मास्वादमिव अनुभावयन् अलौकिकचमत्कारकारी भवति[१]।

अतोऽभिनवमतानुसारं सहृदयहृदयस्थो रत्यादिस्थायिभाव एव व्यञ्जनयाभिव्यक्तो रसो रसास्वादो वाऽभिधीयते। अतश्च संयोगाद् रस निष्पत्तिः इत्यस्य व्यङ्ग्यव्यञ्जकभावसम्बन्धाद् रसाभिव्यक्तिरित्यर्थे पर्यवस्यति।

### (च) रसस्य ध्वन्यमानत्वम्

काव्ये रसभावादिसामान्यशब्देषु, शृङ्गार इत्यादिविशेषशब्देषु सत्स्वपि विभावादिषु असत्सु रसास्वादो न जायते। विभादिषु विद्यमानेषु रसादिशब्देषु अविद्यमानेष्वपि रसास्वादो भवतीति रसादयः शब्दवाच्या[२] न भवन्ति, अपि तु विभावादिभिरभिव्यञ्जनीया भवन्ति। मुख्यार्थबाधाद्यभावात् न लक्षणीयः। पूर्वोक्तप्रकारेण नैव अनुमेयाः। रसस्य यदिदमभिव्यज्यमानत्वं तदेव

---

१. तत्रैव।

२. रसादिलक्षणस्त्वर्थः स्वप्नेऽपि न वाच्यः। काव्यप्र०

ध्वनिवादिनामानन्दादीनां मते ध्वन्यमानत्वम्। यो हि व्यञ्जनव्यापारः स एव ध्वननव्यापारः ध्वन्यते अनेनेति ध्वनिरिति व्युत्पत्तिः।

**( छ ) रसस्य चिद्विषयत्वं चिन्मयत्वं च-**

अभिनवमम्मटादिभिः **व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः** इति प्रति- पादितत्वात् आवरणरहितचिद्विषयीभूतरत्यादिस्थायिभाव एव रसः। यथा हि लोके सुखात्मकज्ञानस्य सुखं विषयः तथैवास्मिन् मतेऽपि रसात्मकज्ञानस्य रसो विषयः। अतः रस आस्वाद्यते, रसोऽनुभूयते, व्यज्यते, ध्वन्यते इत्यादिव्यवहारा भवन्ति। परन्त्वस्मिन् आत्मचैतन्य- विषयीभूते रसे चैतन्यरूपत्वाभावेन रसचैतन्यरेकत्वप्रतिपादिका **रसो वै सः** इत्यादिका श्रुतिर्विरुद्ध्यते। स्वप्रकाशानन्दचिन्मयः[२] इत्यादिकथनं न सँच्छिते। अतः पूर्वोक्तश्रुत्यादिस्वारस्येन **रत्याद्यवच्छिन्नभग्नावरणा चिदेव रसः।** अर्थात् रत्यादिभावविषयकम् आवरणरहितम् आत्मचैत- न्यमेव रसः। अत एवायं रसः प्रकाशमयः, आनन्दमयः, चिन्मयश्च निरूप्यते। अतश्च पण्डितराजजगन्नाथः रसो वै सः इत्यादिश्रुतिस्वारस्येन **वस्तुतो भग्नावरणा चिदेव रस**[३] इति प्रतिपादयाञ्चकार आकाशस्य एकत्वेऽपि यथा घटाकाशो मठाकाशः इत्याद्यौपाधिको भेदो भवति, तथैव चैतन्यरूपस्य रसस्यैकत्वेऽपि रत्याद्यौपाधिकभेदे शृङ्गारादयो भेदा भवन्ति।

यथा हि घटस्थो मणिः घटस्य मुखे अपिहिते-अनावृते सति स्वयं प्रकाशते। मणिप्रकाश एव मणिज्ञानम्, तथैव हृदिस्थो रत्यादिभावः तदावरणभङ्गे सति स्वयं प्रकाशते। रतिप्रकाश एव तच्छृङ्गाररसज्ञानम्। अतो रसो ज्ञानस्वरूप एवेति कथनं सर्वथा सङ्गच्छते।

---

१. तत्रैव चतुर्थोल्लासे २७
द्र० यस्तु स्वप्नेऽपि न शब्दवाच्यो न लौकिकव्यवहारपतितः इत्यादि-ध्वन्या १, ४ का० लोचनम्।

२. साहित्यदर्पणे ३, २१

३. रसगङ्गाधरे रसप्रकरणे।

यद्यपि जीवात्मचैतन्यस्य विषयीभूते ब्रह्मणि स्वतश्चैतन्यरूपत्वं भवति, तथैव सहृदयात्मचैतन्यविषयीभूते रसेऽपि स्वतश्चैतन्यरूपत्वं स्यादिति अभिनवमम्मटादिमतेऽपि न विरोधः, तथापि आत्मचैतन्यविषयीभूतस्य रत्यादिरथायिभावस्य रसत्वे रतिरूपे स्थायिभावे आनन्दमयत्वस्वीकारेऽपि शोकक्रोधजुगुप्सादौ स्थायिनि रसत्वस्वीकारे आनन्दमयत्वं न स्यात्, अत **आत्मचैतन्यमेव रस** इति पक्षः श्रेयस्करः। अत एव अग्निपुराणे व्यासेनोक्तम्

**अक्षरं परमं ब्रह्म सनातनमजं विभुम्।**
**वेदान्तेषु वदन्त्येकं चैतन्यं ज्योतिरीश्वरम्॥**

**आनन्दः सरसस्तस्य व्यज्यते स कदाचन।**
**व्यक्तिः सः तस्य चैतन्यचमत्काररसाह्वया[१]॥** इति

### (ज) रसस्यालौकिकत्वम्

लोकव्यवहारे यादृशः कार्यकारणभावसम्बन्धो दृश्यते काव्यरसे तद्विभावादौ च तादृशकार्यकारणनियमो नावलोक्यते इत्येव रसस्य अलौकिकत्वम्। तथा हि-

### (१) अलौकिकविभावादिकारणाद्रसः अलौकिकः

लोके हि हर्षशोकादिकारणेभ्यो नियमेन हर्षशोकादयो जायन्ते, किन्तु काव्ये हर्षशोकादिजनकेभ्यो विभावादिभ्यः केवलं हर्ष एवाभिव्यज्यते। अतो विभावादीनामलौकिकत्वात् अलौकिकविभावादिभ्यः प्रकाशितो रसोऽप्यलौकिकः

### (२) समस्तकाव्यरसिकेभ्यः दुःखासम्भिन्नानन्दप्रदानात् रसः अलौकिकः।

लौकिकसामग्रीजन्यपदार्थः एकस्मिन् काले एकस्यैव आनन्दाय प्रभवति, अन्यस्य दुःखाय, मोहाय वा जायते, परन्तु अलौकिक-

---

१. अग्निपुराणे ३३९, १-२।

विभावादिसामग्रीजन्यः रसः एककालावच्छेदेन सर्वेषां रसिकानां प्रमोदाय कल्पते। सर्वदा च आनन्दायैव जायते इति रसः अलौकिकः।

**( ३ ) कार्यज्ञाप्यवैलक्षण्याद्रसः अलौकिकः**

लौकिकघटपटादिपदार्थाः कार्या ज्ञाप्या वा भवन्ति। किन्तु रसः कार्यो नास्ति, यतः विभावादिनिमित्तकारणाभावे रसस्याप्यभावो भवति। लौकिकघटादिकार्ये दण्डरूपमिनिमित्तकारणस्य अभावेऽपि कार्यरूप-घटस्याभावो न भवतीति रसः कार्यो नास्ति। रसो ज्ञाप्योऽपि न भवति, यतः पूर्वतः स्थितो घटः दीपेन ज्ञाप्यते। रसस्तु पूर्वतोऽविद्यमानः सन् विभावाद्यैरभित्यज्यते। अतो रसो न ज्ञाप्यः। घटपटादयो ज्ञाप्यपदार्थाः कदाचिद् दीपेन प्रकाशिताः कदाचिद् दीपाभावे अप्रकाशिता भवन्ति. किन्तु रसास्वादावसरे रसो निरन्तरं प्रतीयते न कदाचिदप्रतीतो भवतीत्यतोऽपि रसो न ज्ञाप्यः। अतः कार्यज्ञाप्याभ्यां विलक्षणो रसः अलौकिकः।

(४) रसस्य निर्विकल्पकसविकल्पकज्ञानविषयत्वाभावेन अलौ-किकत्वम्।

निष्प्रकारके-निर्विकल्पके ज्ञाने प्रकारतासम्बन्धादिभानं न जायते। रसज्ञानञ्च विभावादिपरामर्शसम्बन्धादिना न भवति, अतो रसज्ञा निर्विकल्पकं नास्ति।

रसास्वादसमये रसमात्रप्रतीतेः नामरूपसंसर्गादिज्ञानं न भवति, अतः सप्रकारकं सविकल्पकज्ञानमपि रसज्ञानं नास्ति। **विरुद्धयोरेकतर-निषेधेऽपरस्मिन् पर्यवसानमिति** नियमात् निर्विकल्पकत्वाभावे सविकल्पकत्वं, सविकल्पकत्वाभावे निर्विकल्पकत्वमित्युभयज्ञान विषयत्वं रसस्य भवतु नाम इत्यपि रसस्य अलौकिकत्वमेव।

**(५) रसस्य नित्यानित्यविलक्षणत्वाद् अलौकिकत्वम्**

**नासतो विद्यते भावो नाभावो विद्यते सतः**[१]। इति स्मरणात्

नित्यपदार्थस्य अभावो न भवति। परन्तु रसास्वादात् पूर्वं पश्चाच्च रसस्यास्तित्वाभावेन रसस्य नित्यत्वं नास्ति। मेघाच्छन्नसूर्यस्य दर्शनं न भवति, आवरणभङ्गात् परं तस्य दर्शनं जायते। यथा हि आवरणभङ्गात् सूर्यस्य उत्पत्तिः, आवरणात् तस्य नाशो न भवति, तथैव आवरणभङ्गात् रसास्वादः, आवरणाच्च रसास्वादस्य अभावो भवति। अतो रसस्य नवोत्पत्तिः नापि विनाशो जायते। एतेन रसः अनित्योऽपि नास्ति। अतश्च नित्यानित्यविलक्षणो रसः अलौकिकः। नित्यत्वाभावे अनित्यत्वम् अनित्यत्वाभावे नित्यत्वमिति उभयथापि रसस्यालौकिकत्वमेव।

### (६) रसस्य भूतभविष्यद्वर्तमानकालिकत्वाभावादलौकिकत्वम

रसज्ञानस्य साक्षादानन्दमयप्रकाशरूपत्वाद् भूतकालिकत्वं नास्ति। वर्तमानकालीनरसज्ञानस्य भविष्यत्कालिकत्वं न स्यात्। वर्तमाने यत् किमपि भवति तत् कार्यं ज्ञाप्यं वा भवति। यतो हि रसो न कार्यो नापि ज्ञाप्यः अतोऽस्य वर्तमानकालिकत्वमपि न भवति। अतो रसस्य त्रिकालिकत्वाभावादलौकिकत्वम्।

### (७) रसस्य परोक्षप्रत्यक्षभिन्नत्वादलौकिकत्वम्

रसस्य साक्षादनुभूयमानतया परोक्षत्वं नास्ति इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षं भवति। काव्यनिष्ठविभावादिप्रतिपादकशब्दप्रमाणेन अभिव्यञ्जितस्य रसस्य प्रत्यक्षत्वमपि नास्ति। अतो रसस्य परोक्षप्रत्यक्षज्ञनवैलक्षण्यादलौकिकत्वं रसस्य परोक्षभिन्नत्वेन प्रत्यक्षत्वं, प्रत्यक्षभिन्नत्वेन परोक्षत्वं इत्युभयत्वन्तु अलौकिकत्वमेव[1]। एवं हि पूर्वोक्तं विविधमलौकिकत्वं रसस्य महत्त्वं सूचयति।

एवं हि सविस्तरं साङ्गोपाङ्गं रसविवेचनं कुर्वद्भिः आनन्दाभिनवमम्मटादिभिः रसक्षेत्रे प्रायः किमपि नावशेषितम् अत एव

---

१. द्र० काव्यप्रकाशरसप्रकरणम्।

| | | |
|---|---|---|
| १. | रुय्यकस्य | अलङ्कारसर्वस्वे, |
| २. | क्षेमेन्द्रस्य | औचित्यविचारचर्चायाम्, |
| ३. | हेमचन्द्रस्य | काव्यानुशासने, |
| ४. | शारदातनयस्य | भावप्रकाशने, |
| ५. | मलधारिनरेन्द्रप्रभसूरिणः | अलङ्कारमहोदधौ, |
| ६. | भावदेवसूरेः | काव्यालङ्कारसारे, |
| ७. | अमृतानन्दयोगिनः | अलङ्कारसंग्रहे, |
| ८. | जयदेवस्य | चन्द्रालोके, |
| ९. | निःशङ्कशार्ङ्गदेवस्य | सङ्गीतरत्नाकरे, |
| १०. | विद्याधरस्य | एकावल्याम् |
| ११. | शिङ्गभूपालस्य | रसार्णवसुधाकरे, |
| १२. | अल्लराजस्य | रसरत्नप्रदीपिकायाम्, |
| १३. | विद्यानाथस्य | प्रतापरुद्रयशोभूषणे, |
| १४. | द्वितीयवाग्भटस्य | काव्यानुशासने, |
| १५. | पौण्डरीकरामेश्वरस्य | रससिन्धौ, |
| १६. | गङ्गानन्दकविराजस्य | कर्णभूषणे, |
| १७. | वेणीदत्तस्य | |
| १८. | अप्पयदीक्षितस्य | कुवलयानन्दे, चित्रमीमांसायाम्, |
| १९. | मुरारिदानस्य | यशवन्तयशोभूषणे, |
| २०. | राजचूडामणिदीक्षितस्य | काव्यदर्पणे |
| २१. | चिरञ्जीवभट्टाचार्यस्य | काव्यविलास |
| २२. | विद्याभूषणस्य | साहित्यकौमुद्याम् |
| २३. | वीरेश्वरस्य | अलङ्कारकौस्तुभे |
| २४. | सर्वेश्वरस्य | साहित्यसारे |

२५. धर्मदाससूरिणः **विदग्धमुखमण्डने**,

२६. अच्युतरायस्य **साहित्यसारे च**

रसभावादिनिरूपणे किमपि मौलिकं वैशिष्ट्यं नास्ति। अच्युतरायः साहित्यसारे युद्धदानदयाधर्मसत्यविद्यातपोबलत्यागयोगक्षमाज्ञानानां द्वादशानां भेदात् उत्साहस्थायिभावकस्य वीररसस्य द्वादशभेदान् प्रतिपादयतीति वैशिष्ट्यम्।

२७. विश्वनाथकविराजः काव्यप्रकाशानुसारं विभावादि- निरूपणं कुर्वन्नपि रसस्वरूपप्रदर्शने किमपि वैशिष्ट्यं निर्दिशति। तथा हि

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्वर्शशून्यो ब्रह्मास्वादसहोदरः॥**

**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः[१]॥**

**स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः।**

इत्येवं प्रतिपादयन् स रसे आस्वादे च कोऽपि तात्त्विको भेदो नास्तीति प्रतिपादयति। **रसः स्वाद्यते**, इति व्यवहारस्तु **ओदनं पचति** इति व्यवहारवत्, **राहोः शिरः** इत्यभेदे षष्ठीवत् अभेदे भेदारोपः। अथवा, **रसः स्वाद्यते** इति **भिद्यते काष्ठं स्वयमेवेतिवत्** कर्मकर्तरि प्रयोगः। इत्थं विविधप्रक्रियाभिः स रसास्वादयोरभेदं प्रदर्शयति।

वैष्णवाचार्याणां रूपगोस्वामिजीवगोस्वामिकविकर्णपूरमधुसूदन-सरस्वतीप्रभृतीनां भक्तिरसविषयकविचारवैशिष्ट्यन्तु रसस्य प्रकृति-विकृतिभावनिरूपणप्रसङ्गे पूर्वं प्रदर्शितमेव।

---

१. साहित्यदर्पणे ३, २१

२. अलङ्कारशेखरे म० २०।

२८. भूदेवशुक्लः स्वीये **रसविलासे** अभिनवगुप्तमनुसरन् रसध्वनिं काव्यात्मानं स्वीकृत्य तदनुसारेण रसादिं निरूपयामास।

२९. कशवमिश्रः **अलङ्कार शेखरे रस आत्मा परे मनः**[1]

इत्येवं प्रतिपाद्य रसस्य काव्यात्मत्वं स्वीकृत्य सरसं काव्यमेव रसिकजनपरितोषाय कल्पते इति निम्नप्रकारेण प्रदर्शयाञ्चकार

**साधुपाके विना स्वाद्यं भोज्यं निर्लवणं यथा।**
**तथैव नीरसं काव्यं स्यान्नो रसिकतुष्टये**[2]**॥**

३०. काव्यशास्त्रमर्मज्ञः पण्डिराजजगन्नाथः अभिनवमम्मटादीन् अनुसरन्नपिं **रसगङ्गाधरे** अनेकत्र मौलिकविचारं प्रदर्शयामास। रसप्रकरणेऽपि तस्य विचारे वैशद्यं नवीनत्वञ्चावलोक्यते। रसस्वरूपवर्णने पण्डितराजः

**समुचितललितसन्निवेशचारुणा काव्येन समर्पितैः सहृदयहृदयं प्रविष्टैः तदीयसहृदयता सहकृतेन भावनाविशेषमहिम्ना विगलित-दुस्यन्तरमणीत्वादिभिरलौकिकविभावानुभावव्यभिचारिशब्दव्यपदेश्यैः शकुन्तलादिभिरालम्बनकारणैः अश्रुपातादिभिः कार्यैः चिन्तादिभिः सहकारिभिश्च संभूय प्रादुर्भावितेन अलौकिकव्यापारेण तत्काल-निर्वर्तितानन्दांशावरण ज्ञानेन अत एव प्रमुष्टपरिमितप्रमातृत्वादि निजधर्मेण प्रमात्रा स्वप्रकाशतया वास्तवेन निजस्वरूपानन्देन सह गोचरी क्रियमाणः प्रागविनिविष्टवासनारूपो रत्यादिरेव रसः**[3] इत्येवं रसस्वरूपं दर्शयन्-

**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः** इति मम्मटमत- मनुसरन्नपि **रसो वै सः** इत्यादिश्रुतिस्वारस्येन रसस्य चैतन्यरूपत्वमेव स्वीचकार

---

१. अलङ्कारशेखरे म० २०।
२. अलङ्कार शेखरे, २०
३. रसगङ्गाधरे पृ० ३७

इत्थं हि रसस्वरूपं, रसनिष्पत्तिकारणं, निष्पत्तिप्रक्रियाञ्च अतीव सूक्ष्मेक्षिकया दार्शनिकदृष्ट्या विविच्य पण्डितराजः रसानुभूतेः आश्रय-प्रकारयोः कुत्र कथमितिरूपयोविचारशिखरमारोढुं निर्दिष्टानि एकादशसोपानानि प्रदर्श्य रसविचारविकासक्रमं प्राकाशयत्।

तथा हि

(१) नाट्याभिनयप्रेक्षकाः सहृदया नटादिविभावमवलोक्य रस-मनुभवन्ति। तत्र प्रत्यक्षतो विभावमेव कारणं मन्यमानाः भाव्यमानो विभाव एव रसः इति प्रथमं मतं प्रत्यपादयन्।

(२) रत्याद्यनुकूलचेष्टां विना केवलं नटनटीरूपं विभावमवलोकयन् प्रेक्षकः रसं नानुभवतीति हेतोः, भाव्यमानोऽनुभाव एव रसः इति द्वितीयमतं प्राचलत्।

(३) यावद्धर्षलज्जादिमनोवृत्तीनां व्यभिचारिणां सर्वथानुकूलमभिनयं न प्रेक्षते, तावद् विभावानुभावावपि प्रेक्षकं नानन्द-यतः, इति कारणात् पुनः पुनरनुसन्धीयमानो व्यभिचारी एव रसः इति तृतीयमतं प्रथामगात्।

(४) पश्चात् केचिदालोचका आचचक्षिरे यत् एषु त्रिषु विभावानु- भावव्यभिचारिषु यो ह्येव चमत्कारको भवति स एव रसं जनयति, नान्यः इति हेतोः **त्रिषु य एव चमत्कारी स एव रसः अन्यथा त्रयोऽपि न** इति चतुर्थं मतं प्रासरत्।

(५) ततः परं रत्यादिस्थायिभावानां स्थैर्यं तेषामाप्रबन्धं स्थायित्वम्, व्यभिचारिणां क्षणस्थायित्वञ्च पश्यन्तो विवेचका एकस्यैव विभावस्य अनेकरत्यादिभावेषु आलम्बनत्वम्, एकस्यैवानुभावस्य अनेकत्र कार्यत्वम् एकस्यैव व्यभिचारिणो बहुषु सञ्चारित्वमवलोक्य, रसविशेषं प्रति विभावादीनामनैयत्यं विज्ञाय कश्चिदेकश्चमत्कारी सन्नपि रसी-भवितुं नार्हतीति विभावादयस्त्रयः समुदिता रसाः इति पञ्चमं मतं पप्रथे।

(६) एतेषु पञ्चसु मतेषु प्रथितेष्वपि रसस्वरूपमनिश्चितमवलोक्य भरतमुनिः विभावानुभावव्यभिचारिसंयोगाद् रसनिष्पत्तिरिति मतं समुद्घोषयामास। एवञ्च विभावेन समुद्भूतः, अनुभावेन प्रतीतः, व्यभिचारिणा च परिपुष्टः रत्यादिस्थायिभावः रसतामेतीति निश्चयोऽभवत्। किञ्च संयोगान्निष्पत्तिरिति रहस्यम्-अर्थात् रसज्ञानं प्रत्यक्षात्मकम्, अनुमित्यात्मकं शाब्दं वा, रसास्वादः अनुकर्तरि, अनुकारके, सहृदयप्रेक्षके वा भवतीत्यात्मकं—समुद्घाटयितुमनेके व्याख्यातारः बद्धपरिकरा अभूवन्। तत्र प्रथमव्याख्याकारो भट्टलोल्लटः शकुन्तलाविषयकरतिमति दुष्यन्ते रसज्ञानं प्रत्यक्षात्मकं, रसोद्रेकः अनुकार्ये मुख्यतः अनुकर्तरि अरोपितश्चेत्ति षष्ठं मतं प्रथयाञ्चकार।

(७) रससूत्रस्य द्वितीयो व्याख्याकारः शङ्कुकः दुष्यन्तनिष्ठशकुन्तलाविषयकरतिं नटे अनुमाय वस्तुतः अनुकार्यस्थरसस्य सामाजिकोऽपि अनुमित्यात्मकं ज्ञानं करोतीति सप्तमं मतं प्रसारयाञ्चकार।

(८) तृतीयव्याख्याकृद् भट्टनायकः अभिधायकत्वव्यापारेण ज्ञातः, भावकत्वव्यापारेण साधारणीकृतो भावितः, भोजकत्वव्यापारेण भोगविषयीकृतो रत्यादिभावो रसो भोगास्वादात्मकः सामाजिकस्य आत्मसाक्षात्काररूपो भवतीति अष्टमं मतं प्रथयामास।

(९) ततश्च केचन आलोचकविचक्षणाः रससूत्रं स्वमतानुसारं व्याचक्षाणा निम्नोक्तमपरं मतं प्रदर्शयामासुः— विभावादिज्ञानात् परं सहृदयाः दुष्यन्तनिष्ठशकुन्तलाविषयकरति व्यञ्जनया प्रतियन्ति। ततश्च स्वसहृदयतासहकृतेन पुनः पुनरनुसन्धानरूपभावनात्मक दोषेण कल्पितदुष्यन्तत्वाच्छादिते स्वात्मनि शुक्तौ रजतमिव कल्पितशकुन्तलाविषयकरतिमवभासमानामनुभवन्ति अर्थात् आस्वादयन्ति। इयं हि सहृदयात्मनि अवभासमाना इति सदसद्विलक्षणा सती अनिर्वचनीया। एवं हि मतेऽस्मिन् पूर्वोक्तभावनारूपदोषेण भ्रमात् दुष्यन्तोऽहमित्यहं मन्ये सामाजिके प्रतीयमानः साक्षिभास्यः अनिर्वचनीयशकुन्तलादिविषयकरतिरूपः स्थायी एव रसः।

(१०) केचन व्याख्याकाराः व्यञ्जनावृत्तिं पूर्वोक्तामनिर्वचनीयताख्यातिञ्च अस्वीकुर्वाणाः अनुकर्तुः अनुभावानामवलोकनात् दुष्यन्ते शकुन्तलाविषयकरतेरनुमानं जायते। पश्चात् भावनात्मकदोषवशात् सामाजिकः दुष्यन्तोऽहं शकुन्तलाविषयकरतिमान् इत्याकारकभ्रमात्मकज्ञनेन भ्रान्तो भवति। इत्थं भ्रामात्मकरतिभाव एव रस इति प्रतिपादयाञ्चक्रुः।

(११) रससूत्रस्य सर्वश्रेष्ठप्रामाणिकव्याख्याकारः आचार्याभिनवगुप्तपादः विभावानुभावव्यभिचारिसंयोगाद्- व्यङ्ग्यव्यञ्जकभावसम्बन्धात् अभिव्यक्तः सहृदयहृदयस्थो रत्यादिभावो रस इति चरमं मतं सिद्धान्तत्वेन स्थापयामास। अत्र रसज्ञानं शाब्दमपि **तत्त्वमसि** इत्येतद् वाक्यजन्यशाब्दबोध इव साक्षात्कारात्मकः[१]।

**एतेषु रसनिष्पत्तिविषयकेषु** एकादशसु मतेषु प्रथमद्वितीयतृतीयमतेषु[२] पण्डितराजः वैमत्यं प्रदर्श्य अवशिष्टेषु अष्टसु यथाकथञ्चिन्न्यूनाधिकरूपेण स्वसम्मतिं प्रदर्शयामास। तत्र

चतुर्थमते-संयोगाद् रसनिष्पत्तिः इत्यत्र **संयोगस्यार्थः चमत्कारः निष्पत्तेरर्थः परिणतिः।** पञ्चमे मते **विभावादिसंयोगः विभावादिसम्मेलनं, निष्पत्त्यर्थः परिणतिः।**

षष्ठे मते-**संयोगार्थः संम्बन्धः, निष्पत्त्यर्थः आरोपः**

सप्तमेमते-**संयोगार्थः अनुमानं, निष्पत्तिरनुमितिः**

अष्टमे मते-**संयोगस्यार्थः साधारणात्मकं भावनं निष्पत्तेरर्थः साक्षात्कारविषयीकृतिः।**

---

१. रसगङ्गाधरे प्रथमानने रसप्रकरणम्।

२. रसनिष्पत्तिविचारे विकासक्रममभिलक्ष्यपण्डितराजप्रदर्शितक्रमो मयात्र परिवर्तितः।

नवमे मते **संयोगार्थः** भावनाविशेषदोषः, **निष्पत्त्यर्थः अनिर्वचनीय- दुष्यन्तरत्याद्युत्पत्तिः।**

दशमे मते **संयोगार्थः ज्ञानम्, निष्पत्त्यर्थः उत्पत्तिः।**

एकादशे मते **संयोगस्यार्थः व्यञ्जनं, निष्पत्तेरर्थः अभिव्यक्तिः।** एतेषु अन्तिमं मतं पण्डितराजस्य सर्वथाभिप्रेतम्[१]।

**काव्यश्रवणात्परं रसनिष्पत्तिपर्यन्तं समपेक्षितकालस्य विमर्शः**

काव्यश्रवणात् परं रसनिष्पत्तिपर्यन्तं समपेक्षितकालविमर्शनमप्यत्र विभावनीयम्

काव्यस्य श्रवणात् परिशीलनाद्वा काव्यार्थबोधो जायते। काव्यार्थ-बोधसमकाले एव रसनिष्पत्तिर्न भवतीति सहृदयानुभव एव साक्षी। एवं हि वस्तुस्थितौ शब्दार्थबोधोत्तरं रसनिष्पत्तिपर्यन्तं कियान् कालः समपेक्षितो भवतीति विमर्शनपरेण पदवाक्यप्रमाणपारावारीणेन महामहोपाध्यायगोकुल-नाथोपाध्यायेन विस्तरेण काव्यप्रकाशविवरणे यदेतत् प्रसङ्ग एकादशक्षणकालात्मकवस्तुस्थितेर्निरूपणं कृतं तस्यैष सारांशः।

**शून्यं वास गृहं विलोक्य शयनादुत्थाय किञ्चिच्छनैः**
**निद्राव्याजमुपागतस्य सुचिरं निर्वर्ण्य पत्युर्मुखम्।**
**विश्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीं**
**लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता।।**

एतस्यैव संक्षिप्तरूपम्

**चुम्बन्ती शनकैः कान्तं निद्राव्याजमुपागतम्।**
**ज्ञात्वा नतमुखी बाला हसता तेन चुम्बिता।।**

इत्यादि काव्यश्रवणानन्तरम्

प्रथमक्षणे-श्रुतपदानामाकाङ्क्षादिविशिष्टमनुसन्धानं जायते

द्वितीयक्षणे-समुपस्थितानां पदार्थानां स्मरणं भवति।

---

१. रसनिष्पत्तिप्रसङ्गे द्रष्टव्यमेतत्।

तृतीयक्षणे कर्तृकर्मक्रियानुसन्धानपूर्वकसमस्तवाक्यार्थबोधे निद्राव्याजोपगताभिन्नकान्तकर्मकस्य शनैश्चुम्बनस्य कर्त्री कान्तव्याज-ज्ञानानतमुखी बाला हसदभिन्नकान्तकर्तृकचुम्बनकर्मेतिरूपवक्यार्थः प्रतीयते।

चतुर्थक्षणे-(क) कान्तबालापदाभ्यां प्रकरणाद्युपस्थितौ विशिष्ट-नायकनायिकारूपौ आलम्बनविभावौ

(ख) शून्यवाससदनेन उपस्थितः उद्दीपनविभावः,

(ग) नायिकाकृतचुम्बनं, मुखनमनं, नायककृतमुखचुम्बनञ्च आङ्गिकानुभावः

(घ) रोमाञ्चः सात्त्विकानुभावः,

(ङ) चुम्बनेन औत्सुक्यहर्षौ, शनकैरिति शङ्का, निद्रया कैतवं ज्ञात्वेति मतिः, मुखनमनेन लज्जा, हासेन हर्षः, प्रियकृतचुम्बनेन औत्सुक्यमित्येवं विधा व्यभिचारिभावाः, इत्येवं प्रकारेण आलम्बनोद्दीपन-विभावानुभावसात्त्विकभावव्यभिचारिभावानां स्मरणं जायते। तदेव काव्य-वैचित्र्यम्।

पञ्चमे क्षणे-विभावानुभावव्यभिचारिसहकृतवाक्यार्थः। तथाहि-निद्राव्याजोपगतकितवकान्तकर्मकशनैश्चुम्बनकर्त्री शङ्कौत्सुक्य- हर्षवती कैतवज्ञानप्रयोज्यमुखनमनकर्त्री मतिलज्जावती बाला हसदभिन्नेन हर्षवता उत्सुकेन कान्तेन चुम्बितेति व्यञ्जनाभिधाव्यतिकरेण वाक्यार्थानुभवस्य उल्लासो जायते। अस्मिन् काव्यारोहात्मके वाक्यार्थानुभवे प्रकरणोपस्थितविशिष्टकान्तत्वकान्तात्वाभ्यां विभावौ, तद्वदनयोः संयोगत्वेन चुम्बनं, कान्तेन सह सपदि सङ्गच्छेयेत्याकारेण औत्सुक्यं मास्म जागरीत् कान्तः इति शङ्का, कितवकान्तः मद्भावमज्ञासीत् इति मतिः, असमञ्जसकान्तेन मद्भावपरिज्ञानमिति लज्जा, प्रसभमनया विदितभावया सङ्गच्छेयेत्यैत्सुक्यं चेति विशेषाकारेण अवगम्यन्ते। अस्मिन्

वैयञ्जनिकवाक्यार्थबोधे वाक्यार्थ इव वाक्यमपि भासते एव, आलोकघटयोरिव व्यङ्ग्यव्यञ्जकयोः वाक्यतदर्थयोरेकबुद्ध्यनुपवेश-ध्रौव्यात्।

षष्ठे क्षणे-वाक्यवाक्यार्थयोरुभयोर्भासनात् वाक्यगताः शब्दालङ्काराः वाक्यार्थगता अर्थालङ्काराश्च स्वदन्ते। मूर्ध्नि वर्गान्त्यगस्पर्शादिवर्णैश्चित्ते द्रवीभावश्च जन्यते। यतो द्रुतेन चेतसा रत्यादेराह्लादकत्वं नाम गुणो विषयी-करिष्यते। ते एते शब्दार्थचमत्काराः काव्यश्रवणादनन्तरे षष्ठे क्षणे भुज्यन्ते।

सप्तमे क्षणे पूर्वोत्पन्नकाव्याद्यारोहस्वरूपसाधारणीकरणव्यापार-सहकृतेन शब्दार्थालङ्कारचमत्कारौ आस्वादयता द्रवता च चित्तेन साधरणीकृता विभावानुभावव्यभिचारिणः प्रतिसन्धीयन्ते।

एतस्मिन् सप्तमे क्षणे साधारणीकरणव्यापारमहिम्ना समुद्रिकसत्त्वेन चित्तेन विशिष्टकान्तत्वकान्तात्वादिपरिच्छिन्नधर्मपरिहारेण जु गुप्साद्यव्यञ्जनस्त्रीपुंसव्यञ्जनघटितनायकत्वादितिरोभावेन विभावाः साधारण्येन प्रतीता भवन्ति।

चुम्बनमुखनमनद्वितीयमुखचुम्बनादयोऽनुभावास्तु रागेङ्गितत्व कुट्टमितत्वप्रगभत्वादिना, शङ्कौत्सुक्यादयश्च प्रगल्भत्वादिना, शङ्कौत्सुक्यादयश्च विषयविशेषपरिहारेण साधारणतया स्मर्यन्ते। अत्रैव विभावादिभिः सह अनुभवितुः प्रियत्वद्वेष्यत्वोदासीनत्वसम्बन्धविशेष-स्वीकारपरिहारयोरभावो जायते।

अष्टमे क्षणे भावास्वादात्मकः काव्यार्थः अनुभूयते, तथा हि प्रकृते **चुम्बन्ती शनकैः कान्तमित्यत्र** ग्राम्याभिजात्यहाववती प्रगल्भकितवं चालम्ब्य लज्जितोत्सुका कुट्टमितवती चेत्येकः, ग्राम्यहावादिमतीम् आलम्ब्य उत्सुकहृष्टश्च प्रगल्भः इत्यपरः काव्यार्थः यौगपद्येन स्वदते।

नवमे क्षणे-अत्रैव स्थायिभावस्मरणम्।

दशमे क्षणे स्थायिभावास्वादः, अर्थात् अत्र स्थायिभावः अभिव्यक्तो

भवति। अत्रैव उभयोर्नायकनायिकारूपयोर्विभावयोरतीव युगपत् आस्वाद्येते।

एकादशे क्षणे पानकरसन्यायेन अलौकिकरसास्वादः। तथा हि-

आस्वादगोचरानर्थान् उपादाय तथाविधविभावानुभावव्यभिचारिभाव-सम्पन्ने परस्पररतिमदालम्बिते रतिः इति चर्वणा। अत्रैव वस्तुतः सहृदय-हृदयस्थस्थायिभावस्य अभिव्यक्तिः रसनिष्पत्तिरिति।

अयं हि अलौकिकरसास्वादः आस्वादकप्रकर्षबलात् अधिकाधिक-कालं यथानुभवमवतिष्ठमानो निखिलैरेव चमत्कारास्वादादिभिः सह विरमति। संख्याजनकापेक्षाबुद्धीनां प्रयोजनानुरोधेन त्रिक्षणावस्थायित्वमिव काव्यप्रयोज्यास्वादपरम्पराणामधिकाधिककालव्यापकत्वमविरुद्धम् स्थायि-भावस्य वैयञ्जनिकबोधे व्यञ्जकस्य विभावादेर्भानाय रसनिष्पत्तिपर्यन्तं तदवस्थानमावश्यकम्। इदन्त्विहावधेयम्-

**लोको युङ्क्ते यथा योगान् भक्तिज्ञान क्रियात्मकान्।**
**श्रेयो विधित्सया शान्त्यै परानन्दानुभूतये॥**

**काव्यात्मानं तथा वेत्तुं परानन्दरसाप्तये।**
**प्रक्रिया साधनान्येवं साधयन्ति विचक्षणाः॥**

यथा हि आत्मानं तत्त्वतो वेत्तुं, तज्ज्ञानेन परमानन्दमवाप्तुञ्च त्र्यङ्गमष्टाङ्गं वा योगं युञ्जन्ति योगिनस्तथैव काव्यात्मानमवगन्तुं तद्विज्ञानेन परमानन्दरूपरसमास्वादयितुञ्च सहृदयविचक्षणाः पूर्वोक्तानि प्रक्रियासाधनानि साधयन्ति परमं प्रयोजनञ्च निष्पादयन्ति। एवं हि विच्छित्तिसारो रसोऽनेकविधेन प्रकारेण समाराध्यते इति शम्।

---

# अलङ्कारविच्छित्तिमीमांसा

कान्तं सदपि निर्भूषं न भाति वनिताननम्।
अतो भूषणमेवास्ति वपुः शोभाकरं परम्॥१॥

वक्रत्वेनैव विच्छित्तिर्वक्रत्वं काव्यजीवितम्।
वक्रत्वमेव काव्यानां पराभूषा प्रकीर्तिता॥२॥

अलङ्कारस्य द्वे रूपे विद्येते काव्यवर्त्मनि।
असाधारणमेकन्तु साधारणमथापरम्॥३॥

वक्रोक्त्यतिशयोक्तिर्याऽतिशयाधानकारणात्।
अलङ्कारान्तराणामप्येका प्राणप्रदा मता॥४॥

वागीशमहिता सेयं काव्यजीवितरूपिणी।
काव्ये सर्वाधिका काम्या विच्छित्यै कविपुङ्गवैः॥५॥

अनयैव विभाव्यन्ते काव्यार्थाः प्रीतये यतः।
यत्नोऽस्यां कविना कार्यो नालङ्कारोऽनया विना॥६॥

भूषणान्तरविच्छित्त्यै काव्योत्कर्षाय सत्कवेः।
वक्रोक्तिरेवादर्तव्या किमन्यैः साधनान्तरैः॥७॥

काव्यशोभाकरो धर्मोऽलङ्कारो वातिशायकः।
गुणोपहितशोभायाः काव्ये तस्यापि चिन्तनम्॥८॥

अलङ्कारे रसादीनामङ्गित्वमथवाङ्गता।
विचार्यमेतद् युक्त्यास्मिन् प्रसङ्गे च विशेषतः॥९॥

**अलङ्कारस्य सरणी भामहाद्यैः प्रतिष्ठिता।**
**विवेचितात्र ताटस्थ्याद्युक्तायुक्तत्वमार्गतः॥१०॥**

मुनिना भरतेन श्रव्यदृश्यात्मके काव्ये सर्वोत्कर्षकतया, परमाह्लादजनकतया काव्यप्राणस्वरूपतया च प्रतिपादितस्यापि रसस्य भामहादिभिः दृश्यात्मके नाट्ये एव तादृशीं स्थितिं मन्यमानैः श्रव्यात्मके काव्ये तु अलङ्कारेणैन चारुत्वं भवतीति स्वीकुर्वाणैः

**न कान्तमपि निर्भूषं विभाति वनिताननम्[१]।**

इत्युद्घोषयद्भिः अलङ्कारस्यैव सर्वाधिकं महत्त्वं प्रतिष्ठापयाञ्चक्रे।

तत्र च

**सरसिजमनुविद्धं शैवलेनापि रम्यं**
**मलिनमपि हिमाशोर्लक्ष्म लक्ष्मीं तनोति।**
**इयमधिकमनोज्ञा वल्कलेनापि तन्वी**
**किमिव हि मधुराणां मण्डनं नाकृतीनाम्॥**

इति अलङ्काराद् गुणः श्रेयानिति महाकविकालिदासीयशाश्वत-सिद्धान्तविपरीतं स्वमतं प्रदर्शयाञ्चक्रे।

एवञ्च भावपक्षे कालपक्षस्य विजयं मन्वानेनभामहेन अलङ्कारेणैव काव्ये विच्छित्तिर्भवति काव्यत्वञ्च जायते इति स्वीकुर्वाणेन, सामान्यं विशिष्टञ्चेति द्विविधेऽलङ्कारे सामान्यरूपा वक्रोक्तिरतिशयोक्तिर्वा महाकवीनां सर्वाभीष्टफलप्रदा, तदर्थमेव च तैः प्रयतितव्यमिति निर्दिशता प्रत्यपादि च

**निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।**
**मन्यन्तेऽतिशयोक्तिं तामलङ्कारतया यथा॥**
**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना[३]॥ इति**

---

१. भामहालङ्कारे १, १३
२. अभिज्ञानशाकुन्तले।
३. भामहा॰ २, ८१, ८५

अर्थात् कवेर्यद्वचः केनापि निमित्तेन यत्र लोकातिक्रान्त-गोचरतामादधाति तत्र अतिशयस्य विद्यमानतया तामेव अतिशयोक्ति-रूपामलङ्कृतिं मनीषिणो मन्यन्ते। सैव एषा वक्रोक्तिरूपा अतिशयोक्तिः काव्ये सर्वत्र अभिप्रेता भवति, अनयैव वक्रोक्त्या काव्ये अर्थस्य विभावनं रसमयीकरणं जायते, अतः काव्ये वक्रोक्तिसम्पादनाय कविना विधेयो यत्नः। अस्या वक्रोक्तिरूपाया अतिशयोक्तेरभावे काव्यं न भवति काव्यमपि तु वार्तामात्रम् तथा हि-

**गतोऽस्तमर्को भातीन्दुर्यान्ति वासाय पक्षिणः।**
**इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते[१]॥**

अत एव

**हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः।**
**समुदायाभिधानस्य वक्रोक्त्यनभिधानतः[२]॥**

काव्ये शब्दस्य अर्थस्य च वक्रतया युक्ता विशिष्टा उक्तिरेव अलङ्कृतिर्भवति नान्यथेति तत्तात्पर्यम्[३]। आचार्यभामहस्य अतिशयोक्ति-विषयकमिदं मतं समर्थयता अभिनवगुप्तपादेनापि लोचने-**शब्दस्य हि वक्रता अभिधेयस्य च वक्रता लोकोत्तीर्णेन रूपेण अवस्थानम्। तेनातिशयोक्तिः सर्वालङ्कारसामान्यम्। तथाहि-अनयातिशयोक्त्यार्थः सकलजनोपभोगपुराणीकृतोऽपि विचित्रतया भाव्यते। तथा प्रमदोद्यानादिभिर्विभावतां नीयते विशेषेण च भाव्यते रसमयी-क्रियते[४]** इत्येवं रूपेण प्रतिपाद्यते। **अत एव सा ( अतिशयोक्तिः ) काव्यजीवितत्वेन तु विवक्षिता[५]** इति च तेन निर्दिश्यते।

---

१. तत्रैव २, ८६
२. तत्रैव २, ८७
३. वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः तत्रैव १, ३६
वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते। तत्रैव ५, ६६
४. ध्वन्या लोचने पृ० २६०
५. तत्रैव पृ० २६०

आचार्यानन्दवर्धनेनापि भामहप्रतिपादितामतिशयोक्तिं समर्थयता प्रतिपादितं यथा **यतः प्रथमं तावदतिशयोक्तिगर्भा सर्वालङ्कारेषु शक्यक्रिया कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं ह्यतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत्**[1]। इति।

भरतेन प्रतिपादितस्य काव्यात्मरूपस्य रसभावादेः प्रेयोरसवदूर्जस्वि-नामकेषु अलङ्कारेषु अन्तर्भावं कुर्वाणेन भामहेन रसादेः प्रतिपादन मलङ्काराङ्गातयैव कृतम्।

अलङ्कारसम्प्रदायस्य परमसमर्थक आचार्यदण्डी

**काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।**
**ते चाद्यापि विकल्प्यन्ते कस्तान् कात्स्र्न्येन वक्ष्यति**[2]॥

इत्येवं रूपेण काव्यसौन्दर्यसम्पादकान् धर्मान् अलङ्कारान् मन्यमानः अलङ्कारक्षेत्रं विस्तारयन्

**यच्च सन्ध्यङ्गवृत्त्यङ्गलक्षणाद्यागमान्तरे।**
**व्यावर्णितमिदं चेष्टमलङ्कारतयैव नः**[3]

इति रूपेण सन्धिसन्ध्यङ्गादिकं सर्वमलङ्कारतयैव स्वीकुर्वन् एतत् सर्वमलङ्कारकुक्षावेव न्यक्षिपत्। भामहप्रतिपादितामतिशयोक्तिञ्च अलङ्का-रान्तराणां सौन्दर्यसाधिकां स्वीकुर्वाणः एतां वागीशमहिताममन्यत[4]।

रीतिरात्मा काव्यस्येति काव्यात्मत्वेन रीतिं स्वीकुर्वाणो वामनाचार्यः सौन्दर्यरूपालङ्कारात् काव्यस्य ग्राह्यत्वमङ्गीकृत्य अलङ्कारस्य महत्त्वं प्रदर्शयाञ्चकार[5]।

---

१. ध्वन्या० ३, ३७ कारिकायाम्।
२. काव्यादर्शे २, १
३. तत्रैव २, २६७
४. अलङ्कारान्तराणामप्येकमाहुः परायणम्। वागीशमहितामुक्तिमिमामतिशयाह्वयाम्॥ तत्रैव। २, २०
५. काव्यं ग्राह्यमलङ्कारात्। सौन्दर्यमलङ्कारः। काव्यालङ्कारसूत्रवृत्तौ १, १, १-२।

किन्तु गुणालङ्कारयोर्वास्तविकं भेदं प्रदर्शयन् **काव्यशोभायाः कर्तारो धर्मा गुणाः। तदतिशयहेतवस्त्वलङ्काराः**[१] इति प्रतिपाद्य दण्डिनः काव्यशोभासम्पादकं धर्ममलङ्कारं निराकृत्य काव्यशोभासम्पादकत्वेन गुणं तत्स्थाने प्रतिष्ठापयामास। गुणजनितकाव्यशोभाया अतिशयाधायकतया अलङ्कारमहत्त्वञ्च प्रदर्शयामास। गुणविरहिते काव्ये अलङ्कारो वैरस्यमेवावहतीति समर्थयन्नाह

**यदि भवति वचश्च्युतं गुणेभ्यो**
**वपुरिव यौवनवन्ध्यमङ्गनायाः।**
**अपि जनदयितानि दुर्भगत्वं**
**नियतमलङ्करणानि संश्रयन्ते**[२]**।। इति**

इदं वामनमतमनुसरन्नेव इन्दुराजः काव्यालङ्कारसारसंग्रहटीकायां लघुवृत्तौ गुणरहितं हि काव्यमकाव्यमेव भवति नत्वलङ्काररहितम्। अलङ्काराणां गुणोपजनितशोभे काव्ये शोभातिशयविधायित्वात्[३] इत्येवं प्रतिपादयति स्म।

गुणालङ्कारविषयके इत्थं विचारे सञ्जातेऽपि प्रथमवाग्भटः

**दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितं वचः।**
**स्त्रीरूपमिव नो भाति तं ब्रुवेऽलङ्क्रियोच्चयम्**[४]**।।**

इत्येवं कथयन् भामहसिद्धान्तमेव समर्थयामास अलङ्कार-सम्प्रदायाचार्यैः एकतः अलङ्कारस्य विशेषतो वक्रोक्त्यतिशयोक्ति-रूपस्यालङ्कार सामान्यस्य सर्वप्राधान्यस्वीकरणात् द्वितीयतः काव्ये अङ्गिरूपेण सिद्धस्य रसभावादेः रसवदाद्यलङ्कारद्वारा बोधनाङ्गीकराच्च

---

१. तत्रैव ३, १, १-२
२. तत्रैव ३, १, २ तथा तत्रैव युवतेरिवरूपमङ्गं काव्यं स्वदते शुद्धगुणं तदप्यतीव। विहितप्रणयं निरन्तराभिः सदलङ्कारविकल्पकल्पनाभिः।।
३. लघुवृत्तौ गुणलङ्कारप्रकरणे।
४. वाग्भटालङ्कारे ४, १।

रसाद्यपेक्षया अलङ्कारस्य प्रामुख्यप्रदर्शनात् अलङ्कारस्य काव्यजीवितत्वमङ्गीकृतम्। तत्र रसवदाद्यलङ्कारेषु रसादेरन्तर्लीनीकरणस्य भामहदण्डिभ्यां या प्रक्रिया स्वीकृता तस्यामेव शृङ्खलायाम् एकामपरां कणिकां संयोज्य उद्भटाचार्येण स्पष्टशृङ्गाररसादिस्थले रसवत्, रत्यादिभावस्थले प्रेयस्वत्, रसभावादीनामनौचित्यप्रदर्शनस्थले ऊर्जस्वि, रसभावरसाभासभावाभासादिप्रशमनस्थले च समाहितनामकं चतुर्थं नूतनमलङ्कारमङ्गीकुर्वता समस्तो हि रसप्रपञ्चः अलङ्काराङ्गतयैव प्रतिपादितः[1], रसप्राधान्यं च अनादृतम्।

एवमेव आक्षेपसमासोक्त्यादिषु वस्तुषु व्यंङ्ग्यस्य वाच्यार्थोपकारकतया तथा पर्यायोक्तालङ्कारे अलङ्कारध्वनेः[2] वाच्यार्थस्यैव सहायकतया उद्भटेन रसवस्त्वलङ्काररूपस्य, (न चिरादेव काव्यात्मसिंहासनमलङ्करिष्यमाणस्य) त्रिविधस्यापि व्यङ्ग्यस्य वाच्यालङ्कारेषु उपकारकतया मन्यमानेन काव्ये अलङ्कारस्यैव अङ्गित्वं स्थापितं तथा स्वस्य अलङ्कारसम्प्रदायानुयायित्वं प्रख्यापितम्।

एतस्यामेव शृङ्खलायाम् आधिकारिकत्वेन अलङ्कारस्य प्रासाङ्गिकत्वेन च रसादेः प्रतिपादनं विदधत् अन्वर्थनामके स्वकीये **काव्यालङ्कारे**[3] आचार्य रुद्रटः रसवदाद्यलङ्कारेषु रसादीन् अनन्तर्भावयन्नपि भावालङ्कारे प्रतीयमानमर्थं संगृह्य अलङ्कारस्याङ्गित्वमेव समर्थयामास।

तथाहि रुद्रटस्य

**यस्य विकारः प्रभवन्नप्रतिबद्धेन हेतुना येन।**
**गमयति तदभिप्रायं तत्प्रतिबन्धञ्च भावोऽसौ[4]॥**

---

१. काव्यालङ्कारसारसंग्रहे ४, २-७
२. तत्र काव्यालङ्कारा वक्रोक्तिवास्तवादयोऽस्य ग्रन्थस्य प्राधान्यतोऽभिधेयाः। अभिधेयव्यपदेशेन हि शास्त्रं व्यपदिशन्ति स्म पूर्वकवयः। दोषा रसाश्चेह प्रासङ्गिकाः, न तु प्रधानाः। रुद्रटालङ्कारे नामिसाधुटीकायाम् १, २ पृ० २।
३. तत्रैव।
४. तत्रैव ७, ३८, ४०।

इत्ययं भावालङ्कारः

ग्रामतरुण्या नववञ्जुलमञ्जरी सनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया[1]॥

इत्यत्र मुखच्छायामालिन्यातिशयरूप वाच्यार्थः वञ्जुललतागृहे दत्तसङ्केता नागतेति व्यङ्ग्यार्थापेक्षया अधिक- चमत्कारकः। अतो ध्वनिवादिनां मम्मटादीनां मतेऽत्र गुणी भूतव्यङ्ग्यत्वम्। किन्तु रुद्रटः इदं पद्यं भावालङ्कारस्योदाहरणं मनुते। एवमेव रुद्रटस्य

एकाकिनी यदबला तरुणी तथाह।
मस्मिन् गृहे गृहपतिश्च गतो विदेशम्॥
किं याचसे तदिह वासमियं वराकी।
श्वश्रूर्ममान्धबधिरा ननु मूढ पान्थ[2]॥

इदमपि भावालङ्कारस्य द्वितीयप्रभेदोदाहरणं, यत्र मम्मटादयः निषेध-रूपवाच्येन विधिरूपध्वन्यर्थावगत्या उत्तमध्वनिकाव्यं मन्यन्ते। एवञ्च रुद्रटाचार्यः रसभावादिकं स्वीकुर्वाणोऽपि तस्य व्यङ्ग्यत्वमस्वीकुर्वन् अलङ्कार-सम्प्रदायं प्रति स्वकीयमभिनिवेशं प्रदर्शयति।

काव्यसाम्राज्ये आनन्दवर्धनाद्याचार्यैः अभिषिक्ते ध्वन्यात्मनि सिंहा-सनारूढे सत्येव गुणालङ्काररीतिवृत्तिप्रभृतयः स्वस्वनियताधिकारे कार्यं कुर्वाणा एकेनैव प्रयोजनेन काव्यात्मानं सम्राजं प्रसादयितुं, प्रसाधयितुं, विच्छित्तिशालिनं च कर्तुं प्रयतमाना अभूवन्।

जीवात्मनः शौर्यवीर्यदाक्षिण्यादयो गुणा यथा तदाश्रिताः सन्तः तस्योत्कर्षकास्तथैव काव्यात्मनो माधुर्यौजःप्रसादाख्याः तदाश्रिताः[3] सन्त एव आत्मनः समुत्कर्षका अभूवन्।

---

१. तत्रैव ७, ३९ काव्यप्रकाशे १, ३
२. तत्रैव ७, ४१।
३. तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः। ध्वन्या० २.६, काव्यप्र. ६.२

कटककुण्डलहारादयोऽलङ्कारा: यथा सजीवस्यैव शरीरस्य अङ्गानि विभूषयन्त: शरीरशोभया शरीरिणं जीवात्मानमेव अलङ्कुर्वन्ति, तथैव अनुप्रासोपमादयोऽलङ्कारा: काव्यशरीराङ्गरूपं[1] शब्दम् अर्थञ्च भूषयन्त: काव्यात्मनो रसादे: शोभातिशयाधाने प्रवृत्ता बभूवु:। आत्मन: शोभातिशय-विधायित्वादेव स्वयमपि महत्त्वशालितामदधु:।

शरीराङ्गविशेषसङ्घटना: शरीरसौष्ठवं प्रकाशयन्त्यो यथा अत्मानं विशेषविधिना समुत्कर्षयन्ति तथैव काव्यशब्दार्थशरीरसंघटना[2]: वैदर्भी गौडीपाञ्चालीतिरूपा: उपनागरिकापरुषाकोमलेतिरूपा वा काव्यशरीर-सौष्ठवं प्रदर्शयन्त्य: औचित्यसहचरसहयोगेन रसविशेषं चुम्बन्त्य:[3] रसोत्कर्षकतयैव स्वकीयमहत्त्वं प्रदर्शयामासु:।

आरभटीकैशिकीसात्त्वतीभारतीरूपा वृत्तयस्तु रसविशेषेणैव संलग्ना: सत्य: स्वस्वमात्मानं कृतार्थयाञ्चक्रु:।

अमुमेव काव्यात्मानं ध्वनिं केन्द्रे निधाय तमभित: परितश्च चङ्क्रम्यमाणा गुणालङ्कारादय: स्वसाफल्यं लभन्ते तथा सहृदयहृदयानन्दाय कल्पन्ते। इदमेव तथ्यं प्रबोधयन् आचार्याभिनवगुप्तपाद:

**वस्तुतो ध्वन्यात्मैवालङ्कार्य:। कटककेयूरादिभिरपि आत्मैव अलङ्क्रियते। तथा ह्यचेतनं शवशरीरं कुण्डलाद्युपेतमपि न भाति। अलङ्कार्यस्याभावात्। यतिशरीरं कटकादियुक्तं हास्यावहं भवति अलङ्कार्यास्यानौचित्यात् इति वस्तुत: आत्मैवालङ्कार्य:** इति प्रतिपादयन् वस्तुस्थितिं विस्पष्टयति स्म[4]।

---

१. अङ्गाश्रितास्त्वलङ्कारा मन्तव्या: कटकादिवत्।। ध्वन्यालोके २, ७। काव्य प्र॰ ८, २
२. असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घ समासेति त्रिधा संङ्घटनोदिता।। ध्वन्या॰ ३, ५
३. गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन् व्यनक्तिसा। रसान्, तन्नियमे हेतुरौचित्वं वक्तृ वाच्ययो:।। तत्रैव ३, ६
४. ध्वन्या॰ २, ६ कारिकायां लोचनम्।

अत एव-

रसध्वनिर्न यत्रास्ति तत्र वन्ध्यं विभूषणम्।
मृताया मृगशावाक्ष्याः किं फलं हारसम्पदा॥

रसभावादिविषयविवक्षाविरहे सति।
अलङ्कारनिबन्धो यः स कविभ्यो न रोचते[1]॥

इत्याद्यभियुक्तोक्तं प्रशस्यते[2]।

भामहदण्ड्युद्भटादीनां रसवदाद्यलङ्काराणामसङ्गतिं निर्दिशन् आनन्दवर्धनाचार्यः प्रतिपादयतिस्म

प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।
काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिः[3]॥ इति

अर्थात् यत्र काव्ये वाक्यार्थस्य प्राधान्यं भवति रसादयश्च तदङ्गतया वर्ण्यन्ते तत्रैव काव्ये रसादिरलङ्कारो भवति। तथा हि

१. प्रधाने वाक्यार्थे रसस्याङ्गत्वे रसवत्,

२. भावस्य अन्याङ्गत्वे प्रेयस्वत्,

३. रसाभासभावाभासयोरन्याङ्गत्वे ऊर्जस्वि,

४. भावशान्तेरन्याङ्गत्वे समाहितः,

५. भावोदयस्य अन्याङ्गत्वे भावोदयः,

६. भावसन्धेरन्याङ्गत्वे भावसन्धिः,

७. भावशबलताया अन्याङ्गत्वे भावशबलता नामका अलङ्कारा

---

१. सरस्वतीकण्ठाभरणे प० ५ पृ० ७९१।
२. ध्वन्या० ३, ४३ का०
३. ध्वन्यालोके २, ५।

भवन्तीति वस्तुस्थितिः। न तु रसादेः प्राधान्ये रसवदादयो भवितुमर्हन्ति, रसादेरेव अलङ्कार्यत्वात्। अत एव कुन्तकेनाप्युक्तम्

अलङ्कारो न रसवत् परस्याप्रतिपादनात्।
स्वरूपादतिरिक्तस्य शब्दार्थासङ्गतेरपि[1]॥ इति

ध्वनिवादिभिरलङ्कारस्य स्वरूपकार्यादिविषये इत्थं निर्णये कृते काव्य- शास्त्रस्य परवर्तिषु आचार्येषु अलङ्कारनिरूपणे केचित् शब्दतः केचनार्थतः तामेव ध्वनिवादिनामलङ्करविचारणिमन्वसरन्। किन्तु येन केनापि रूपेण काव्ये अलङ्कारसंयोजनस्य आवश्यकत्वं सर्वैरेवाङ्गीकृतम्। जयदेवेन तु स्वकीये चन्द्रालोके-

अङ्गीकरोति यः काव्यं शब्दार्थावनलङ्कृती।
असौ न मन्यते कस्मादनुष्णमनलं कृती[2]॥

इत्येवं कथयता अलङ्कारनिबन्धने अत्यावेशः प्रदर्शितः।

## अलङ्कारेषु मौलिकत्वम्

यथा रसस्य परमार्थतः एकत्वेऽपि उपाधिभेदाद् भिन्नेषु रसेषु कस्यचित् प्रकृतित्वं कस्यचिच्च विकृतित्वं प्रतिपाद्यते, तथैव अलङ्कारस्यापि चमत्कारजनकत्वेन एकत्वेऽपि तत् साधनीभूततत्त्वानामनेकतया अलङ्कारस्यानेकत्वे कस्यचिन् मौलिकत्वं कस्यचिच्च तज्जन्यत्वमिति विचार्यते।

तत्र-

(क) वक्रोक्तिरतिशयोक्तिर्वा एको मौलिकोऽलङ्कारः, अन्येषु तन्मूलकतयैवालङ्कारत्वमिति भामहादयः प्राहुः।

---

१. वक्रोक्तिजी॰ ३, ११५।
२. चन्द्रालोके १, ८।

(ख) अर्थस्यालङ्कारा वास्तवमौपम्यमतिशयः श्लेषः।

एषामेव विशेषा अन्ये तु भवन्ति निःशेषाः[1]॥

इति रुद्रटाचार्यानुसारं (१) वास्तवम्, (२) औपम्यम्, (३) अतिशयः, (४) श्लेषश्चेति चत्वरि मौलिकतत्त्वानि यान्याधारीकृत्य वास्तवमूलकाः सहोक्तिसमुच्चादयः त्रयोविंशतिः अलङ्काराः, औपम्यमूलकाः उपमोत्प्रेक्षा-रूपकादयः एकविंशतिः, अतिशयमूलकाः पूर्वविशेषविभावनादयः द्वादश, श्लेषमूलकाश्च अविशेषविरोधाधिकादयो द्वादशालङ्कारा भवन्ति[2]।

(ग) पूर्वोक्तं विस्तारयन् रुय्यकः अलङ्कारसर्वस्वे निम्नोक्तानि- सप्त मौलिकतत्त्वानि स्वीकृत्य तज्जन्यानामलङ्काराणां वर्ग-निरूपणमकरोत् तानि- (१) सादृश्यम्, (२) विरोधः, (३) शृङ्खलाबन्धः, (४) तर्कन्यायः, (५) वाक्यन्यायः, (६) लोकन्यायः, (७) गूढार्थ-प्रतीतिश्चेत्येतानि सप्त मौलिकतत्वानि।

एतेषु

(१) सादृश्यमूलकस्य-

(क) भेदाभेदप्रधानमूलकात् उपमा, उपमेयोपमा, अनन्वयः स्मरणञ्चेति चत्वारः,

(ख) अभेदप्रधाने (१) आरोपमूलकात् रूपकम्, परिणामः सन्देहः, भ्रान्तिमान्, उल्लेखः, अपह्नुतिश्चेति षट्,

अभेदप्रधाने (२) अध्यवसायमूलकात्उत्प्रेक्षा, अतिशयोक्तिश्चेति द्वौ,

(ग) गम्यौपम्याश्रयमूलकात्-

---

१. रुद्रटालङ्कारे ७, ९।

२. तत्रैव ७, ११-१२/ ८, २-३/ ९, २/ १०, २१, २५/

१. पदार्थगततया तुल्ययोगिता, दीपकञ्चेति द्वौ,

२. वाक्यार्थगततया प्रतिवस्तूपमा, दृष्टान्तः, निर्दशना चेति त्रयः,

३. भेदप्राधान्येन व्यतिरेकः, सहोक्तिः विनोक्तिश्चेति द्वौ,

५. विशेषणविशेषविच्छित्त्याश्रयात् श्लेषः, अप्रस्तुतप्रशंसा, अर्थान्तरन्यासः, पर्यायोक्तं, व्याजस्तुतिः, आक्षेपश्चेति षट् अलङ्कारा जायन्ते।

(२) विरोधगर्भमूलकात्-

विरोधः, विभावना, विशेषोक्तिः, अतिशयोक्तिः, असङ्गतिः, विषमः, समः, विचित्रम्, अधिकम्, अन्योन्यम्, विशेषः, व्याघातश्चेति द्वादशालङ्काराः प्रभवन्ति।

(३) शृङ्खलाबन्धमूलकात्-

कारणमाला, एकावली, मालादीपकं, सारश्चेति चत्वारः प्रजायन्ते।

(४) तर्कन्यायमूलकात्-

काव्यलिङ्गम्, अनुमानञ्चेति अलङ्कारद्वयं जायते।

(५) वाक्यन्यायमूलकात्-

यथासंख्यं, पर्यायः, परिवृत्तिः, परिसंख्या, अर्थापत्तिः, विकल्पः, समुच्चयः, समाधिश्चेति अष्टावलङ्कारा भवन्ति।

(६) लोकन्यायमूलकात्-

प्रत्यनीकं, प्रतीपं, मीलितं, सामान्यं, तद्गुणः, अतद्गुणः, उत्तरञ्चेति सप्तालङ्काराः,

(७) गूढार्थप्रतीतिमूलकात्-

सूक्ष्मं, व्याजोक्तिः, वक्रोक्तिः, स्वभावोक्तिः, भाविकम्, उदात्तं, संसृष्टिः, सङ्करश्चेति अष्टावलङ्काराः प्रभवन्ति।

विद्याधरः एकावल्यां विद्यानाथश्च प्रतापरुद्रयशोभूषणे रुय्यकेण प्रतिपादितानि इमान्येव सप्त मौलिकतत्त्वानि यत् किञ्चित् परिवर्तन-परिवर्धनपुरस्सरं विशदयति। अत एतयोरलङ्कारमूलतत्त्वप्रतिपादने न कापि नूतनता।

एतेषु अलङ्कारेषु औपम्यमूलिका उपमा किमपि अपूर्वं वैशिष्ट्य-मादधाना अलङ्कारेषु शिरोरत्नायते इति यायावरीयो राजशेखरो निरदिशत्

**अलङ्कारशिरोरत्नं सर्वस्वं काव्यसम्पदाम्।**
**उपमाकविवंशस्य मातैवेति मतिर्मम[१]।। इति**

अत एव अप्पयदीक्षितमतेऽपि एकैवेयम् उपमा नटी विविध-चित्रभूमिकामादधती काव्यरङ्गे रसिकान् रञ्जयति। तथा हि-

**उपमैका शैलुषी संप्राप्ता चित्रभूमिका भेदान्।**
**रञ्जयति काव्यरङ्गे नृत्यन्ती तद्विदां चेतः[२]।। इति**

इदमत्रावधेयम्- वक्रोक्तिरतिशयोक्तिर्वा उपमा वा काव्ये साधनतयैव अतिशयाधानं कुर्वती साध्यं रसानन्दं सम्यगाराधयितुमेव समुल्लसति। इति।

---

१. काव्यमीमांसा
२. चित्रमीमांसा पृ० ५।

# रीतिविच्छित्तिमीमांसा

गुणैर्विशिष्टा रचना पदानां रीतिरुच्यते।
तस्याः सम्यग् विधानेन काव्ये काव्यत्वमाप्यते॥१॥

रीतिं विना यतः काव्यं लोके वार्ताय्यते ध्रुवम्।
काव्यस्यात्मा ततो रीतिर्गीयते वामनादिभिः॥२॥

रेखास्वेव यथा चित्रं तथा काव्यं च रीतिषु।
रेखाऽभावे न चित्रत्वं रीत्यभावे न काव्यता॥३॥

रीतिं सम्प्राप्य यत् किञ्चिद् वचः सौन्दर्यमश्नुते।
रीतिरेकैव काव्येऽस्ति परमार्थप्रसाधिका॥४॥

वैदर्भी चाथ पाञ्चाली गौडीरीतिस्त्रिरूपिका।
वैदर्भी तूत्तमा तासु समग्रगुणशालिनी॥५॥

वैदर्भमार्गप्राणा ये गुणा दश समीरिताः।
सर्वे तामेव सेवन्ते महाराज्ञीं विशेषतः॥६॥

सौन्दर्यरूपालङ्कारात् काव्यं ग्राह्यं भवत्यतः।
सौन्दर्यहेतुर्वैदर्भी साध्यते कविपुङ्गवैः॥७॥

काव्यशोभाकरो धर्मोऽलङ्कारो दण्डिनोच्यते।
वामनेनोच्यते सम्यक् काव्यशोभाकरो गुणः॥८॥

भूष्यते रीतिमत् काव्यं गुणैर्युक्तं विशेषतः।
तस्मादलङ्कृतिः काम्या मन्यते वामनादिभिः॥९॥

**इत्येवं विषया नैके मार्गेऽस्मिन् युक्तिभिर्मया।**
**विवेचिताः प्रयत्नेन काव्यशास्त्रानुसारतः॥१०॥**

ओजःप्रसादमाधुर्यसमतोदारतादिभिर्गुणैर्विशिष्टा पदानां रचना रीतिर्भवति[१]। विविधैर्गुणैर्जायमानेयं रीतिः वामनाचार्यमते काव्यस्य आत्मसिंहासनमधिरोहति[२]। काव्यस्य आत्मस्थानीया रसगुणालङ्काराः पूर्वाचार्यैः मुख्यजीवितप्राणादिशब्दैरेव प्रतिपादिताः। वामनेनैव सर्वप्रथमं **काव्यस्यात्मा** इति आत्मशब्दं प्रयुञ्जानेन काव्यशरीरे आत्मतत्त्वं स्पष्टतो निरुपितम्। रीतेः स्वरूपं, विषयं, प्रयोजनं, महत्त्वञ्च सम्यङ्निर्दिशता रीत्यैव काव्ये काव्यत्वमिति तेन हि व्यवस्थापितम्।

यद्यपि वामनाचार्यस्य रीतिस्वरूपनिरूपणे-

१. ऋग्वेदे प्रयुक्तमार्गधारा गत्याद्यर्थिकारीति;

२. (काव्यमीमांसासाक्ष्येण राजशेखरेण रीतिनिर्णयं **सुवर्णनाभः**[३] इत्येवं निर्दिष्टः- अद्याप्यनुपलब्ध एव सुवर्णनाभस्य रीतिविषयको ग्रन्थः)

३. नाट्यशास्त्रस्य

**चतुर्विधा प्रवृत्तिश्च प्रोक्ता नाट्यप्रयोगतः।**
**आवन्ती दाक्षिणात्या च पाञ्चाली चौड्रमागधी[४]॥**

इति पृथिव्यां नानादेशवेशभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिरित्येवं रूपा प्रवृत्तिः;

४. विष्णुधर्मोत्तरपुराणस्य

---

१. विशिष्टा पदरचना रीतिः। विशेषो गुणात्मा। काव्यालङ्कारसूत्रवृत्तौ १, २, ७-८।
२. रीतिरात्मा काव्यस्य। तत्रैव १, २, ६
३. काव्यमीमांसा पृ० ३
४. नाट्यशास्त्रे १४, ३६

आवन्ती दाक्षिणात्या च तथा चैवात्र मागधी।
पाञ्चाली मध्यमा चेति वृत्तिः सा तु चतुर्विधा॥

वेषभाषानुकरणं तथा चात्र प्रवर्तनम्।
प्रवृत्तिरिति विख्याता वृत्तीनामाश्रयास्तु ताः[१]॥

इति प्रवृत्तिमूला वृत्तिः;,

५. बाणभट्टस्य-

श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थगौरवम्।
उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरः॥

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम्[२]॥

इति गुणालङ्काराधारेण निर्मेया उदीच्यप्राच्यदाक्षिणात्यगौडरूपा चतुर्विधा काव्यशैली;

६. भामहाचार्यस्य

वैदर्भमन्यदस्तीति मन्यन्ते सुधियः परे।
तदेव च किल ज्यायः सदर्थमपि नापरम्॥

गौडीयमिदमेतत्तु वैदर्भमिति किं पृथक्।
गतानुगतिकन्यायान् नानाख्येयममेधसाम्॥

ननु चाश्मकवंशादि वैदर्भमिति कथ्यते।
कामं तथास्तु प्रायेण संज्ञेच्छातो विधीयते[३]॥

अलङ्कारवदग्राम्यमर्थ्यं नादयमनाकुलम्।
गौडीयमपि साधीयो वैदर्भमपि नान्यथा[४]॥

---

१. विष्णुधर्मोत्तरे ३, २०, ५९
२. हर्षचरिते कथामुखे।
३. भामहालङ्कारे, १, ३२-३३।.
४. तत्रैव १, ३५।

इति गुणालङ्काराधारेणैव मार्गस्य श्रेयस्त्वं न नाममात्रेणेति वैदर्भगौड-मार्गविषयकपरामर्शः;

७. आचार्यदण्डिनः

अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।
तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ॥

इति मार्गद्वयं भिन्नं तत् स्वरूपनिरूपणात्[१]॥
तद्भेदास्तु न गण्यन्ते वक्तुं प्रति कविस्थिताः[२]॥

श्लेषः प्रसादः समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोजः कान्तिस्समाधयः॥

इति वैदर्भमार्गस्य प्राणा दश गुणाः स्मृताः।
एषां विपर्ययः प्रायो दृश्यते गौडवर्त्मनि[३]॥

इति श्लेषादीनां दशानां गुणानां वैदर्भस्य प्राणत्वं गौडस्य अर्थव्यक्त्यौदार्यसमाधीनामेव जीवनाधायकत्वमित्यादिपरकालिकरीति-तत्त्वाधारश्चेत्यादीनि विचारस्रोतांसि आसन्, तान्यात्मसात् कुर्वता काव्य-सन्दर्भे रीतेः प्रयोगं कुर्वाणेन **वामानाचार्येण** काव्यसौन्दर्यसम्पादकैः काव्य- व्यवहारप्रवर्तकैर्वा श्लेषप्रसादादिगुणैः विशिष्टायाः पदरचनात्मिकाया रीतेरात्मत्वं संस्थापयता कश्चिन् महत्त्वपूर्णो नवीन-विचारः प्रदर्शितः।

**अत्रायमाशयो वामनस्यावधेयः**

श्लेषादिगुणः काव्यविच्छित्तेः सम्पादको नित्यधर्मः यं गुणरूपं नित्यधर्ममन्तरा गुणालङ्कारसंस्कृतशब्दार्थरूपकाव्यसृष्टिरेव[४] न जायते।

---

१. काव्यादर्शे १, ४१
२. तत्रैव १, ४२
३. तत्रैव
४. काव्यशब्दोऽयं गुणालङ्कार संस्कृतयोः शब्दार्थयोर्वर्तते भक्त्या तु शब्दार्थमात्रवचनः। काव्यालङ्कारसूत्रवृत्तौ।

एषाञ्च नित्यधर्माणां गुणानामभिव्यक्तिः रीतिद्वारैव भवति, अतो रीतिरेव काव्ये सारभूततया काव्यस्यात्मा। अन्यच्च यथा रेखासु[१] चित्रं प्रतिष्ठितं, रेखाया अभावे चित्रस्यैव सर्वथा अभावः, तथैव वैदर्भीगौडी पाञ्चालीरूपासु त्रिविधासु रीतिषु काव्यं प्रतिष्ठितं, रीतेश्चानस्तित्वे-काव्यस्यैवानस्तित्वं भवति। अतः काव्यत्वसम्पादिकाया रीतेरेवात्मत्वम्।

रीतिद्वारैव काव्ये तुच्छमपि वस्तु सारभूतं सत् प्रमोदाय प्रभवति। वितथमपि च वस्तु सत्यरूपं दधाति। अतो वैदर्भीरीतेर्महत्त्वं प्रदर्शयता वामनेन सगद्गदं प्राचीनोक्तं समुद्धृतम्-

**किन्त्वस्ति काचिदपरैव पदानुपूर्वी**
**यस्यां न किञ्चिदपि किञ्चिदिवावभाति।**
**आनन्दयत्यथ च कर्णपथं प्रयाता**
**चेतः सताममृतवृष्टिरिव प्रयाति॥**

**वचसि यमधिगम्य स्पन्दते वाचकश्रीः**
**वितथमवितथत्वं यत्र वस्तु प्रयाति।**
**उदयति हि च तादृक् कापि वैदर्भरीतौ**
**सहृदयहृदयानां रञ्जकः कोऽपि पाकः[२]॥ इति**

रीतेर्महत्त्वं गायन्तो महाकवयोऽप्येवमुद्गिरन्ति तत्र महाकविर्माघः

**म्रदीयसीमपि घनामनल्पगुणकल्पिताम्।**
**प्रसारयन्ति चतुराश्चित्रा वाचं पटीमिव[३]॥**

इति रीत्या पंटीमिव रीत्यैव चित्रां वाचं प्रसारयति। पद्मगुप्तपरिमलः

---

१. एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितम्। तत्रैव १, २, १३
२. तत्रैव १, २, २२ कारिकायाम्।
३. शिशुपालवधमहाकाव्ये २, ७४

तत्त्वस्पृशस्ते कवयः पुराणाः श्रीभर्तृमेण्ठप्रमुखा जयन्ति।
निस्त्रिंशधारा सदृशेन येषां वैदर्भमार्गेण गिरः प्रवृत्ताः[१]॥

इत्यभिदधानः कालिदासभर्तृमेण्ठादिभिः प्रदर्शितेन असिधारासदृशेन वैदर्भमार्गेण कवीनां कृते गमनमतिदुष्करमिति प्रतिपादयति।

नीलकण्ठदीक्षितः

सत्यर्थे सत्सु शब्देषु सति चाक्षरडम्बरे।
शोभते यं विना नोक्तिः स पन्था इति घुष्यते[२]॥

अत एव–

आदिः स्वादुषुया, परा कवयतां काष्ठायदारोहणे,
याते निःश्वसितं, नवापि च रसा यत्र स्वदन्ते पराम्।
पाञ्चालीति परम्परा परिचितो वादः कवीनां परं,
वैदर्भी यदि सैव वाचि किमितः स्वर्गेऽपवर्गेऽपि वा[३]॥

इत्येवं निगदन् स्वर्गापवर्गाभ्यामप्यधिकं प्रेयस्करं श्रेयस्करमानन्दं वैदर्भरीतिमये काव्ये अनुभवति।

महाकविबिल्हणः

अनभ्रवृष्टिः श्रवणामृतस्य सरस्वतीविभ्रमजन्मभूमिः।
वैदर्भरीतिः कृतिनामुदेति सौभाग्यलाभप्रतिभूःपदानाम्[४]॥

इति समुद्गिरन् वैदर्भरीतिः, या सरस्वत्या विलासभूमिः पदानां सौभाग्यलाभस्य प्रतिनिधिः, सहृदयानां कर्णामृतस्य

---

१. नवसाहसाङ्कचरिते

२. नलचरिते १, १०।

३. तत्रैव ३, १८

४. विक्रमाङ्कदेवचरिते १, ९

अनभ्रवृष्टिश्च वर्तते, कस्यापि सौभाग्यशालिनो महाकवेः रचनायामेव समुदेति इति मन्यते।

राजशेखरस्य मते तु

**वाग्वैदर्भी मधुरिमगुणं स्पन्दते श्रोत्रलेह्यम्[१]।**

महाकविः श्रीहर्षः

**धन्यासि वैदर्भि!गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।**
**इतःस्तुतिः का खलुचन्द्रिकाया यदब्धिमप्युत्तरलीकरोति[२]॥**

इत्येवं वर्णयन् वैदर्भ्याः (रीतेः दमयन्त्याश्च) धन्यत्वं महत्त्वम् एतदर्थमेव मनुते यत् सा स्वकीयैः औदार्यादिगुणैः नैषधचरितमहाकाव्यं नैषधं महाराजनलञ्च आकर्षति, अर्थात् वशीकरोति। यथा हि चन्द्रिकाया महासागरस्य उत्तरलीकरणे एव महत्त्वं, तथैव वैदर्भ्या नैषधस्य समाकर्षणे एव सौभाग्यमिति सूचयति।

एवं हि महाकविभिः आलोचकाचार्यैश्च मुक्तकण्ठं रीतेर्महत्त्वं गीतम्।

आचार्यवामनमते वैदर्भीगौडीपाञ्चालीति तिसृषु रीतिषु

(१) वैदर्भी-

**अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता।**
**विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते[३]॥**

इत्युक्त्या दोषरहिता श्लेषादिसमग्रगुणोपेता भवति।

ओजः कान्तिमती गौडीया

---

१. बालरामायणे ३, १४

२. नैषधीयचरिते ३, ११६

३. काव्यालङ्कारसूत्रवृत्तौ रीतिप्रकरणे।

**समस्तात्युद्भटपदामोजः कान्तिगुणान्विताम्।**
**गौडीयामिति गायन्ति रीतिं रीतिविचक्षणाः[१]॥**

इत्युक्त्या समासबहुला ओजःकान्तिगुणयुक्ता भवति।

(३) माधुर्यसौकुमार्योपपन्ना पाञ्चाली तु

**आश्लिष्टश्लथभावां तां पुराणच्छाययाश्रिताम्**
**मधुरां सुकुमारां च पाञ्चालीं कवयो विदुः[२]॥**

इति कथनेन गौडीस्वभावविपरीता असमस्ततया सरलप्रकृतिका, अर्थ-प्रकाशने पुराणसरणिमनुसरन्ती, माधुर्यसौकुमार्यगुणशालिनी सती कविभिः समादृता भवति।

एतासु तिसृषु रीतिषु वामनानुसारं वैदर्भी एव समस्तगुणयुक्ततया, तस्यामेव अर्थवैभवस्य वस्तुसौन्दर्यस्य आस्वाद्यतया ग्राह्या[३] भवति। इतरयोर्द्वयोस्तु अल्पगुणत्वात् तथा उपादेयत्वं नास्ति।

वैदर्भ्याद्यभिधानस्य निदानमनुसन्दधानो वामनाचार्यो **विदर्भादिषु दृष्टत्वात् तत् समाख्या। न पुनर्देशैः किञ्चिदुपक्रियते काव्यानाम्[४]** इत्यभिदधानः देशविशेषेण सह रीतिविशेषस्य कमपि सम्बन्धं नाङ्गीकुरुते।

वामनाचार्येण उपर्युक्तप्रकारेण रीतिसिद्धान्ते काव्यजगति प्रतिष्ठापितेऽपि परवर्तिनो विवेचका आचार्याः सिद्धान्तमिमं विभिन्नप्रकारेण केचित् रीतेरात्मत्वं खण्डयन्तः, केचित् तस्याः स्वरूपान्तरं साधयन्तः केचिच्च तस्या रसास्वादे साधनतां निर्दिशन्तः विवेचयामासुः आलोचयामासुश्च।

---

१. तत्रैव।
२. तत्रैव।
३. तासां पूर्वा ग्राह्या गुणसाकल्यात्। तत्रैव १, २, १४
तस्यामर्थगुणसम्पदास्वाद्या। तत्रैव १, २, २०।
४. तत्रैव।

(१) आचार्यः उद्भटः वामनाचार्येण विस्तरेण प्रतिपादितमपि रीतितत्त्वमपश्यन्निव **काव्यालङ्कारसारसंग्रहे** अनुप्रासप्रसङ्गे परुषा, उपनागरिका ग्राम्या कोमला चेति तिस्रो वृत्तीः[1] गौडीवैदर्भीपाञ्चालीनां रीतीनां प्रतिनिधित्वं कुर्वतीः प्रतिपादयामास।

(२) आचार्यमम्मटस्तु उद्भटसरणिमनुसरन् **केषाञ्चिदेता वैदर्भीप्रमुखा रीतयो मताः**[2] इति स्पष्टमुद्घोषयन् उपनागरिका कोमला परुषा चेति वृत्तित्रयमङ्गीचकार, वामनाचार्यरीतेः सर्वथा उपक्षामेव विदधे।

(३) आचार्यरुद्रटः वैदर्भ्यादिरीतेः स्वरूपनिष्पत्तौ पदानां समस्तत्वमसमस्तत्वञ्च बीजत्वेन निर्धार्य वामनोक्तं रीतेर्गुण-विशिष्टत्वमस्वीकृत्य तिसृभिः रीतिभिः साकम् एकां चतुर्थी लाटीयामङ्गीकृत्य रीतिविशेषस्य रसविशेषेण सह सम्बन्धं निश्चिकाय।

तथा हि-

**वृत्तेरसमासाया वैदर्भीरीतिरेकैव।**
**वृत्तैः समासवत्यास्तत्रस्यू रीतयस्तिस्त्रः॥**

**पाञ्चाली लाटीया गौडीया चेति नामतोऽभिहिताः।**
**लघुमध्यायतविरचनसमासभेदादिमास्तत्र॥**

**द्वित्रिपदा पाञ्चाली लाटीया पञ्च सप्त वा यावत्।**
**शब्दाः समासवन्तो भवति यथाशक्ति गौडीया[3]॥**

रसविशेषेण सह रीतिविशेषनियतसम्बन्धप्रसङ्गे च-

---

१. काव्यालङ्कारसारसंग्रहे ४, ६
२. काव्यप्रकाशे ८१
३. रुद्रटालङ्कारे २, ४-६

वैदर्भीपाञ्चाल्यौ प्रेयसिकरुणे भयानकाद्भुतयोः।
लाटीयागौडीये रौद्रे कुर्याद् यथौचित्यम्[१]॥
इह वैदर्भी रीतिः पाञ्चाली वा विचार्य रचनीया।
मधुरा ललिते कविना कार्ये वृत्ती तु शृङ्गारे[२]॥

(४) अग्निपुराणेऽपि[३] एवमेव समासाधारेण चतस्रो रीतयः प्रतिपादिताः सन्ति।

(५) ध्वन्यात्मवादी आनन्दवर्धनाचार्यः रीतेः स्थाने सङ्घटनाशब्दं प्रयुञ्जानः माधुर्यादीन् गुणानाश्रित्य तिष्ठन्त्या रसाभिव्यञ्जिकायाः समासासमासाधारकल्पितकलेवरायाः सङ्घटनायाः त्रैविध्यं निर्दिशन् प्रत्यपादयत्–

असमासा समासेन मध्यमेन च भूषिता।
तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता॥

गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन्, व्यनक्ति सा।
रसान् तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः[४]॥ इति

एतस्याः सङ्घटनाया नियामकं भवति वक्त्रौचित्यं, वाच्यौचित्यं, विषयौचित्यं, रसौचित्यञ्च।

गुणसङ्घटनयोः परस्परसम्बन्धं सूक्ष्मेक्षिकया विवेचयन् आचार्यः तत्र संभाव्यमानान् विकल्पान् प्रदर्शयन् तद्विषयकं सिद्धान्तं प्रत्यपादयत्–

तथा हि–

**अत्र चैते विकल्पाः गुणानां सङ्घटनायाश्च ऐक्यं व्यतिरेको वा। व्यतिरेकेऽपि द्वयीगतिर्बोध्या गुणाश्रया सङ्घटना, सङ्घटनाश्रया वा**

---

१. तत्रैव १५, २०
२. तत्रैव १४, ३७
३. अग्निपुराणे ३४०, १
४. ध्वन्यालोके ३, ४–७

गुणा इति। तत्रैक्यपक्षे सङ्घटनाश्रयगुणपक्षे च गुणानात्मभूतान् आधेयभूतान् वा आश्रित्य तिष्ठन्ती सङ्घटना रसान् व्यनक्तीत्ययमर्थः। यदि गुणाः सङ्घटना चेत्येकं तत्त्वं सङ्घटनाश्रया वा गुणास्तदा सङ्घटनाया इव गुणानामनियतविषयत्वप्रसङ्गः। गुणानां हि माधुर्यप्रसादप्रकर्षः करुणविप्रलम्भशृङ्गारविषय एव। रौद्राद्भुतादिविषयमोजः। माधुर्यप्रसादौ रसभावतदाभासविषया-वेवेति विषय- नियमो व्यवस्थितः। सङ्घटनायास्तु स (नियमो) विघटते। तथाहि-शृङ्गारेऽपि दीर्घसमासा दृश्यन्ते, रौद्रादिष्वसमा-साश्चेति। तस्मान्न गुणाः सङ्घटनास्वरूपाः न च सङ्घटनाश्रयागुणाः[1] इति एतेन गुणाश्रया एव सङ्घटना इति सिद्धान्तः फलति।

रीत्यात्मवादस्य असङ्गतिं प्रदर्शयन् आनन्दः अस्फुटरूपेण[2] प्रतीयमानं ध्वनिरूपं काव्यात्मतत्त्वम् इत्येवमाक्षिपन् रसस्य साधनीभूतां रीतिरूपां सङ्घटनाममन्यत।

(६) राजशेखरेण वचनविन्यासक्रमो रीतिरिति परिभाषमाणेन पदानां समस्ताऽसमस्तताधारेण वैदर्भीगौडीयापाञ्चालीति तिस्र एव रीतयोऽङ्गीकृता[3]:। तथा हि

**किन्तु तत्रास्ति मनोजन्मनो देवस्य क्रीडावासो विदर्भेषु वत्सगुल्मं नाम नगरम्। तत्र सारस्वतेयः (काव्यपुरुषः) ताम् औमेयीम् (साहित्यविद्यावधूं) गन्धर्ववत् परिणिनाय[4]** इत्येवं वर्णयता तेन वैदर्भी प्रति समादरः प्रदर्शितः। राजशेखरस्य विचारणायां वैदर्भीजन्मस्थानं कुण्डिननगरन्तु तत् स्थानं वर्तते

---

१. तत्रैव।

२. अस्फुटस्फुरितं काव्यतत्त्वं यथोदितम्।
अशक्नुवद्भिर्व्याकर्तुं रीतयः संप्रवर्तिताः।। तत्रैव ३, ४७।

३. काव्यमीमांसा पृ॰ २१

४. वैदर्भी गौडीया पाञ्चाली चेति रीतयस्तिस्रः।
आसु च साक्षान्निवसति सरस्वती तेन लक्ष्यन्ते।। तत्रैव पृ॰ ७५।

वाग्देवता वसति यत्र रसप्रसूतिः,
लीलापदं भगवतो मदनस्य यच्च।
प्रेङ्खद्विदग्धवनिताञ्चितराजमार्गं
तत् कुण्डिनं नगरमेष विभुर्बिभर्ति[1]॥

(७) वक्रोक्तिसम्प्रदायप्रवर्तकेन ·कुन्तकेन वैदर्भीगौडी पाञ्चालीनां कृते सुकुमारमार्गविचित्रमार्गमध्यममार्गाणां प्रयोगं कुर्वाणेन रीतिविवेचने काचिन्नूतनविचारधारा प्रवाहिता। तदुनसारं कोमलै-रसमस्तैश्च पदैः विन्यस्ते सुकुमारमार्गे माधुर्यप्रसादलावण्याभिजात्यानां चतुर्णाम् असाधारणगुणानां तथा औचित्यसौभाग्ययोः साधारणगुणयोश्च समावेशो भवति। एतेन सुकुमारमार्गः रसादिपरमतत्त्वस्य विन्यासेन परमानन्ददायकः, अवयवसंस्थानरामणीयकेन मनोहरः, चारुत्वपूर्णत्वेन अतिशयसौन्दर्ययुक्तः, प्रतिभानिष्पन्नविचित्रवैचित्र्यशाली च भवति।

विचित्रमार्गे अलङ्काराधिक्यात् आभ्यन्तरगुणापेक्षया बाह्यचाकचिक्यस्य आधिक्येन वक्रोक्तिवैचित्र्यरूपं जीवितं दृश्यते।

उभयमार्गगुणविशिष्टे मध्यमार्गे च वैचित्र्येण कृत्रिमा, सैकुमार्येण सहजा च विच्छित्तिः प्राप्यते[2]।

कविस्वभावमाधारीकृत्य मार्गस्य त्रैविध्यं न तु उत्तमाधममध्यमत्वेन तेन देशाधारतया रीतीनां नामकरणस्याप्यनौचित्यं प्रदर्शितम्[3]।

(८) महिमभट्टेन पदार्थानामुत्कर्षापकर्षयोः समासाभावे एव सम्यक् प्रदर्शनात् समाससंस्पर्शरहिता एका वैदर्भी एव यतः प्रशस्यते, अत एका वैदर्भी रीतिरेव स्वीकृता।[4]

---

१. बालरामायणे ३, ५०
२. वक्रोक्तिजीविते १, २४-५२
३. तत्रैव १, २४ कारिका वृत्तिः।
४. अत एव च वैदर्भीरीतिरेकैव शस्यते।
यतः समाससंस्पर्शस्तत्र नैवोपपद्यते।। व्यक्तिविवेके २, १६

(९) श्रीभोजराजेन आनन्दवर्धनानुसारेण गुणानाश्रित्य, रुद्रटानुसारेण च समस्तासमस्तपदान्याधारीकृत्य षड्रीतयः प्रतिपादयाञ्चक्रिरे। तत्र वैदर्भीपाञ्चाल्योरन्तरालवर्तिनी आवन्तिका, पूर्वरीतेरनिर्वाहे खण्डरीतिर्मागधी चेति रीतिद्वयं नवीनं स्वीचक्रे[1]।

(१०) भोजराजात् परवर्तिषु आचार्येषु अमृतानन्दयोगिनम् अलङ्कारसंग्रहे **रीतिरात्मात्र काव्यस्य कथ्यते सा चतुर्विधा**[2] इति यत् पुना रीतेः काव्यात्मत्वं समुद्घोषितं तत् शृण्वन्तोऽपि परवर्तिनो नादमात्रमशृण्वन् न तु तस्यार्थमगृह्णन्।

इतः परं काव्यशास्त्रे प्रतिपादितेषु आचार्याणां रीतिविषयकलक्षणेषु तद्व्याख्यानेषु च न कापि नूतनता दृश्यते। अतः रुय्यकवाग्भटहेमचन्द्र शारदातनयजयदेवविद्याधरविद्यानाथविश्वनाथजगन्नाथादीनां काव्यशास्त्रीय-ग्रन्थेषु[3] प्रदर्शितानां रीतिविषयकलक्षणादीनामत्रादर्शनमेव परिश्रमहरम्।

(११) नरेन्द्रप्रभसूरिः स्वकीये अलङ्कारमहोदधौ वृत्त्यनुप्रासस्य निरूपणप्रसङ्गे मम्मटानुसारम् उपनागरिकापरुषाकोमलाख्यवृत्तीनां चर्चां विधाय कवर्गादीनामक्षराणां यदि स्वस्ववर्गीयतादृशवर्णैः सह आवृत्तिर्भवति तदा कार्णाटीकौन्तलीप्रभृतयो विभिन्ना वृत्तयो जायन्ते। एतादृशीभिः वृत्तिभिर्यो हि अनुप्रासः प्रजायते स काव्यजीवितं भवति। तत्र कवर्गवर्णावृत्त्या (१) कार्णाटी चवर्गवर्णावृत्त्या (२) कौन्तली, तवर्गवर्णा-

---

१. वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः।
रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते।।
वैदर्भी चाथ पाञ्चाली गौडीयावन्तिका तथा।
लाटीया मागधी चेति षोढा रीतिर्निगद्यते।।
तत्रासमासेत्यादि सरस्वती क० २, ५१-५७

२. अलङ्कारसङ्ग्रहे ५, १

३. एतत् प्रसङ्गे द्र० काव्यात्ममीमांसा पृ० १५५-१६४

वर्तनेन (३) कौङ्कणी, पवर्गीयवर्णावर्तनेन (४) वनवासिका एवमेव विभिन्नवर्णावृत्त्या त्रावणी, माधुरी, मात्सी, मागधी, ताम्रलिप्तिका, औण्ड्री, पौण्ड्रीत्यादयो द्वादशवृत्तयो भवन्ति[1]। वृत्त्यनुप्रासस्य स्थानविशेषाधारेण वर्णावृत्तिजन्यविधानं काव्यशास्त्रे अश्रुतपूर्वम् अदृष्टरञ्च।

(१२) आचार्यकेशवमिश्रः अलङ्कारशेखरे मागधीरीतेः कृते मैथिलीरीतेरपि नामोल्लेखं विदधाति। अन्यच्च तद्रीतिविवेचनं पूर्वाचार्य-मतमनुसरति।

एवं हि रीतिविषयकपूर्वोक्तविचाराणां विहगावलोकनेन अवगम्यते यद् भरतमुनेः नाट्यशास्त्रस्य प्रवृत्तेः प्रादुर्भूता, मार्गप्रस्थानादिशब्दैर्व्यवहृता, प्रारम्भिकभौगोलिकं सीमानं विच्छिद्य काव्ये कविस्वभावेन जायमाना रीतिः विषयानुकूलवर्णनस्य माध्यमतया स्वीकृताभवत्।

वामनाचार्येण **गुणविशिष्टपदरचनात्मिका** रीतिः काव्यस्यात्मसिंहासने प्रतिष्ठापितापि ध्वनिवादिभिरानन्दाभिनवमम्मटादिभिः रसध्वनेरुपकारकतया शरीरसंस्थानसङ्घटनारूपतया ध्वन्यात्मनोऽङ्गत्वेनै-वाङ्गीकृता। अमृतानन्दयोगिना स्वविचारामृतेन पुनस्तां रीतिं जीवयितुकामेनापि तथाकर्तुं समर्थेन नाभूयत। वामनस्य श्लेषप्रसादादीन् शब्दार्थगुणानाधारीकृत्य गुम्फिता विशिष्टा पदरचना रीतिः वस्तुतः शब्दार्थशरीररूपकाव्यस्य अङ्गसंस्थाविशेषवत् सङ्घटनास्वरूपैवासीत् अतः आनन्दवर्धनेन तस्या यत् स्वरूपं कार्यक्षेत्रञ्च व्यवस्थापितं तदेव परवर्तिभिः सिद्धान्ततया गृहीतमनुसृतञ्च।

रीतेरन्तस्तत्त्वरूपगुणस्य, बाह्यतत्त्वरूपसमस्तासमस्तत्वस्यच आधारेण रीतेस्त्रैविध्यमेव युक्ततया समालोचकपुङ्गवैरनुमतम्।

(१) रीतेराधारभूतस्य गुणस्य वस्तुतो माधुर्यौजःप्रसादात्मकतया त्रैविध्येन रीतेस्त्रैविध्यमेव समुचितम्।

१. अलङ्कारमहोदधौ ७, १५ का० वृत्तिः।

(२) कविस्वभावानामानन्त्येऽपि वस्तुतस्त्रैविध्येन कोमलस्वभावाद् वैदर्भी, परुषस्वभावाद् गौडी, उभयमिश्रितस्वभावात् पाञ्चालीति तस्यास्त्रैविध्यमेव जायते।

(३) समासादिबाह्याधारेणापि असमासेन लघुसमासेन वा वैदर्भी, मध्यमसमासेन पाञ्चाली, दीर्घसमासेन च गौडीति तत् त्रैविध्यमेव सिद्ध्यति।

एवञ्च **तत्तद्रसोपकारिण्यस्त्रिविधा रीतयो मताः** इति सिद्धान्तानुसारं रीतिः काव्यात्मनो रसध्वनेः साधनीभूतैवेति पर्यवस्यति।

---

# ध्वनिविच्छित्तिमीमांसा

यथाङ्गनासु लावण्यं प्रसिद्धावयवैः पृथक्।
महाकवीनां वाणीषु ध्वन्यमानं तथाविधम्॥१॥

विच्छित्तिशोभिनैकेन भूषणेनेव कामिनी।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती॥२॥

कथयन्तु किमप्यार्याः काव्ये विच्छित्तिकारणम्।
ध्वनेर्विरहितं काव्यमात्मशून्यं यथा वपुः॥३॥

रसाद्याश्रितरूपत्वे गुणो धत्ते गुणात्मताम्।
रसादेः साधनत्वे हि भूषणं भूषणायते॥४॥

सङ्घटना शरीरस्य यथोत्कर्षाय जायते।
काव्यशब्दार्थवपुषो रीतिः सङ्घटना तथा॥५॥

विच्छित्तेः साधनीभूताऽभिधा वैचित्र्यरूपिणी।
वक्रोक्तिः पदवीं तस्य गन्तुं शक्नोति नैव ताम्॥६॥

रसाद्यर्थे चमत्कारो नैव बाध्यो यथा भवेत्।
औचित्यं कविना तस्माद् योजनीयं प्रयत्नतः॥७॥

रसादेर्व्यज्यमानत्वं वाच्यत्वं न कदाचन।
लक्ष्यत्वञ्चानुमेयत्वं नैव संभाव्यते तथा॥८॥

रसालङ्कारवस्तूनि ध्वने रूपाणि यद्यपि।
एकं रसध्वनिं युक्त्या मन्यतेऽभिनवो मुदा॥९॥

**ध्वनिरात्मास्ति काव्यस्य निजप्राधान्यकारणात्।**
**आनन्देन ध्वनेर्मार्गः काव्ये नूलः प्रवर्तितः॥१०॥**

ध्वनिप्रस्थानप्रवर्तकेन आनन्दवर्धनाचार्येण लोकोत्तरवर्णनानिपुण-कविकर्मरूपस्य रसाद्यास्वादसाधनीभूतव्यञ्जनव्यापारप्रधानस्य ललितोचितसन्निवेशचारुणः शब्दार्थयुगलरूपकाव्यस्य आत्मा ध्वनि-रिति विविधविरोधिमतखण्डनपुरस्सरं सयुक्तिकं स्वकीये ध्वन्यालोक-नामके आदर्शभूते ग्रन्थे प्रतिष्ठापयाम्बभूवे। एतत् प्रसङ्ग

**काव्यस्यात्मा ध्वनिरिति बुधैर्यः समाम्नातपूर्वः**
**तस्याभावं जगदुरपरे भाक्तमाहुस्तमन्ये।**
**केचिद्वाचां स्थितमविषये तत्त्वमूचुस्तदीयं**
**तेन ब्रूमः सहृदयमनः प्रीतये तत् स्वरूपम्[१]॥**

इति प्रतिपादयतात्र अनेकैः साभिप्रायपदैः ध्वनिसम्बन्धे तत्साधक-विषयाः सङ्केतिताः। तत्र

(१) **समाम्नातपूर्वः** इत्यनेन नायं ध्वनेः सर्वप्रथम उद्भावकः। पूर्वाचार्यैर्मनीषिभिर्ध्वनिरयं पूर्वं प्रतिपादितः[२]। यथा हि महर्षियास्कः **समाम्नायः समाम्नातः स व्याख्यातव्यः**[३] इति निगदन् सामाम्नाय वेदस्य समाम्नाततया पूर्ववर्तित्वमसूचयत्, तथैवात्र आनन्दोऽपि ध्वनेः समाम्नाततया पूर्वकालित्वं सूचयति।

(२) **बुधैरिति** बहुवचनेन एकस्य बुधस्य तथाभिधानं प्रामादि-कमपि भवितुमर्हति, न तु भूयसां तथा भवितुमर्हतीति बुधैरिति बहुवचनम्[४]।

---

१. ध्वन्यालोके १, १
२. तत्रैव लोचने।
३. निरुक्ते १, १, १
४. ध्वन्यालोकलोचने तत्रैव।

अन्यच्च भूयांसो बुधा न च अनादरणीयं वस्तु आदरेण उपदिशेयुः। एतत्तु आदरेणोपदिष्टम्, अतो ध्वनिसद्भावे नास्ति शङ्कावसरः।

(३) जगदुरिति भूतकालिकप्रयोगेण ध्वनितत्त्वमजानन्तः प्राचीनवृद्धा यद्ध्वनेरभावमुक्तवन्तस्ते न विचारणीयसुमताः इति सूचितम्।

(४) भाक्तमाहुः इति वर्तमानकालिकलटा इदानीन्तना ध्वनेः व्यज्यमानत्वममन्यमाना अपि तस्य भक्त्या ग्राह्यत्वं स्पष्टीकुर्वाणा ध्वनिसत्तां मन्यन्ते एवेति सङ्केतितम्।

(५) केचन पूर्वं ध्वनितत्त्वमनिर्वचनीयमूचुः इत्यत्र परोक्षलिटा, तेषामनभिज्ञत्वमेवेति सूचयता, नाधुनातना एवं कथयन्ति, कथायिष्यन्ति वेति सूचितम्। एवं हि सतो ध्वनेर्विस्पष्टं रूपं सहृदयानन्दाय वयं निरूपयामः। एतच्च कतिपयैरदृष्टं कतिपयैरन्यथादृष्टं ध्वनिस्वरूपं निरूपयता आनन्दवर्धनेनोक्तम्

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु॥

सरस्वती स्वादु तदर्थवस्तु निष्यंन्दमाना महतां कवीनाम्।
अलोकसामान्यमभिव्यनक्ति परिस्फुरन्तं प्रतिभाविशेषम्[1]॥
इति।

अर्थात् ललनासु मुखकरचरणाद्यवयवभिन्नं लावण्यमिव महाकवीनां काव्येषु गुणरीतिवृत्त्यलङ्कारात् व्यतिरिक्तं सारभूतं रसादि प्रतीयमानं वस्तु विभाति। आह्लादमयं रसादिरूपं तमेवार्थं निष्यन्दमाना महाकवीनां भारती तेषामलोकसामान्यं प्रतिभाविशेषं प्रकाशयन्ती महाकवित्वं प्रकटयति। अत एव

---

१. ध्वन्यालोके १, ४-५

**यत्रार्थः शब्दो वा तमर्थमुपसर्जनीकृतस्वार्थौ।**
**व्यङ्क्तः काव्यविशेषः स ध्वनिरिति सूरिभिः कथितः[१]॥**

इत्येवं प्रतिपादयन्तः सूरयः ध्वनिं, ध्वनिकाव्यञ्च इत्थं लक्षयन्ति। अर्थात् काव्यनिष्ठः शब्दः यत्र स्वं रूपम् अर्थश्च स्वं मुख्यत्वं गौणीकृत्य तं प्रधानं प्रतीयमानमर्थं प्रकाशयतः तद्विशिष्टं काव्यं ध्वनिकाव्यं कथयन्ति मनीषिणः। एतस्य च ध्वनेः सकलसत्कविकाव्योपनिषद्भूतमतिरमणीयं स्वरूपं स्पष्टं समुपलभ्यते। तथा हि–आदिकविवाल्मीकिरामायणे पञ्चवट्यां श्रीरामभद्रं सम्बोधयतो लक्ष्मणस्य हेमन्तवर्णने

**रविसङ्क्रान्तसौभाग्यस्तुषारावृतमण्डलः।**
**निःश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते[२]॥** इत्यत्र

अत्यन्ततिरस्कृतवाच्यध्वनिकाव्ये **निःश्वासान्ध आदर्श इव चन्द्रमा न प्रकाशते** इति नेत्रहीनवाचकस्य अन्धशब्दस्य आदर्शे चन्द्रे च मुख्यार्थबाधात् लक्षणलक्षणया अप्रकाशरूपलक्ष्यार्थस्य प्रतीतेः अप्रकाशातिशयरूपप्रतीयमानार्थो ध्वन्यते। यो हि चन्द्रमाः कदाचित् सूर्य-किरणसौभाग्यमवाप्य आह्लादकः सन् प्रकाशते, तस्य इदानीं हेमन्ते अनुष्णत्वाह्लादकत्वसौभाग्यस्य सूर्ये सङ्क्रमणात्, स एव निःश्वासेन मलिनो दर्पण इव न प्रकाशते नाह्लादयतीति गूढं तात्पर्यम्।

महर्षिव्यासेन कलियुगस्य प्राकट्यं प्राबल्यं च प्रदर्शयता वर्ण्यते–

**अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः।**
**श्वः श्वः पापीयदिवसाः पृथिवी गतयौवना[३]॥**

(अर्थात् समयः सुखेन विरहितः, दुःखेन च परिपूर्णः समागतः।

---

१. तत्रैव १, १३
२. वाल्मीकिरा० आरण्यके १६, १३
३. महाभा० आश्व० पर्वणि १२८, ६

पापीयै: सह सम्बन्धात् पृथिवी च सौभाग्यरहिताभवत्) इत्यत्र अतिक्रान्तप्रत्युपस्थितयो: क्तरूपकृत्प्रत्ययेन, पापीये छरूपतद्धितेन, काला: इति बहुवचनेन च अभिव्यञ्जितनिर्वेदरूपेणार्थेन असंलक्ष्यक्रम-व्यङ्ग्यरूपशांन्तरसध्वनि:[1] तथा पृथिवीगतयौवना इत्यत्र यौवनापदेन अत्यन्ततिरस्कृतवाच्यरूपाविवक्षितवाच्यदुर्भगत्वध्वनी प्रकाशितौ भवत:।

**धृति: क्षमा दया शौचं कारुण्यं वागनिष्ठुरा।**
**मित्राणां चानभिद्रोह: सप्तैता: समिध: श्रिय:[2]॥**

इत्यत्र यज्ञकाष्ठार्थे प्रसिद्धस्य समिच्छब्दस्य मुख्यार्थबाधात् सहायकरूपलक्ष्यार्थेन अनन्यसाधारणरूपलक्ष्मीवृद्धिक्षमत्वरूपोऽर्थ: ध्वन्यते।

एवमेव महाकविकालिदासभारविमाघश्रीहर्षादिमहाकवीनां काव्येषु शतश: सन्ति उदाहरणानि, यत्र रसवस्त्वलङ्कारररूपस्त्रिविधोऽपि ध्वनि: सहृदयहृदयेषु आह्लादं जनयन् प्रकाशते[3]।

एवं विद्यमाने सत्यपि ध्वनौ निम्नोक्तप्रकारेण य: कश्चन ध्वनेरभावं प्रलपति, य: कोऽपि तस्य भाक्तत्वं प्रतिपादयति, यश्च तस्य अनिर्वचनीयत्वं कथयति ते सर्वे न परीक्ष्यवादिन:, दिनमणिप्रकाशेऽपि उलूकायमाना वस्तु नावलोकयन्तीति ते दयनीयदशामावहन्ति।

आनन्दवर्धनाचार्य: ध्वनिप्रस्थापनार्थं[4] विरोधिमुखमौनार्थञ्च विरोधिमतखण्डनपुरस्सरं विस्तरेण सम्प्रत्यपादयत्। तथा हि-

**(क) ध्वन्यभाववादिनां त्रयो विकल्पा: सम्भवन्ति।**

---

१. कालस्य तावन्निर्वेदमभिव्यञ्जयत: शान्तरसव्यञ्जकत्वम्। ध्वन्या॰ ३, १६ कारिकायां लोचनम्।

२. महाभा॰ उद्योगप॰ ३८, ३८।

३. ध्वन्या॰ तृतीयोद्योते।

४. प्रतिष्ठन्ते परम्परया व्यहरन्ति येन मार्गेण तत् प्रस्थानम्। लोचने पृ॰ ८

(१) काव्येशब्दगतसौन्दर्यं शब्दालङ्कारे शब्दगुणे च, अर्थगत-सौन्दर्यम् अर्थालङ्कारे अर्थगुणे चान्तर्भवति। सङ्घटनागतसौन्दर्यं च वैदर्भ्यादिरीतिषु, उपनागरिकादिवृत्तिषु चान्तर्भवति। एतद् व्यतिरिक्तस्य चारुत्वसम्पादकपदार्थस्यैव अप्रसिद्धा ध्वनिनामकोऽयं पदार्थ एवासिद्धः।

**(२) अपरे ध्वन्यभावमेवं कथयन्ति**

परम्परागतप्रसिद्धप्रस्थाने क्वापि ध्वनेश्चर्चा नास्ति। प्रसिद्धप्रस्थानाद् भिन्ने कल्पिते ध्वन्यात्मककाव्यमार्गे काव्यत्वमेव न स्यात्। सहृदयहृदया-ह्लादजनकशब्दार्थयोरेव काव्यत्वेन प्रसिद्धप्रस्थानाद् विलक्षणे तस्मिन् कल्पिते ध्वन्यात्मककाव्यमार्गे यतः काव्यत्वमेव नास्ति तत्र खलु ध्वनेः का चर्चा। यदि नाम ध्वनिसिद्धान्तमङ्गीकुर्वतः कतिपयसहृदयान् प्रकल्प्य तत् प्रसिद्ध्या तद् द्वारा प्रचारितध्वनिप्रसिद्ध्या वा तस्मिन् ध्वनिकाव्ये काव्यत्व- व्यवहारे स्वीकृतेऽपि सकलविद्वत्सु तस्याप्रसिद्ध्या तद् ध्वननात्मकं काव्यं नैवाङ्गीकर्तुं शक्यते। अतः परम्परागतप्रसिद्धमार्गाद् व्यतिरिक्तो ध्वनि- र्नामाऽयं पदार्थो नास्ति।

**(३) अन्ये ध्वन्यभावमित्थं जल्पन्ति-**

यदि नाम ध्वनिः चारुत्वस्यैव कश्चित् प्रकारविशेषस्तर्हि चारुत्व-सम्पादकेषु अलङ्कारादिष्वेव तस्यान्तर्भावो भवितुमर्हति। यदि च विच्छित्ति-जनकेषु कथनप्रकारस्यानन्तभेदप्रभेदेषु कस्यचित् कृते ध्वनिरिति नाम क्रियते, तथापि पूर्वाचार्यैस्तस्य अचर्चितत्वात्, ध्वनिरयं प्रवादमात्रमेव भवेत्। अत एव मनोरथेन निगदितम्-

**यस्मिन्नस्ति न वस्तु किञ्चन मनः प्रह्लादि सालङ्कृति,**
**व्युत्पन्नैरचितं न चैव वचनैर्वक्रोक्तिशून्यं च यत्।**
**काव्यं तद् ध्वनिना समन्वितमिति प्रीत्या प्रशंसञ्जडो**
**नो विद्मोऽभिदधाति किं सुमतिना पृष्टः स्वरूपं ध्वनेः[१]॥इति**

---

१. ध्वन्या॰ प्रथमकारिकायाम्।

एवं हि अभावग्रस्ततया ध्वनेर्नास्ति सद्भाव इति ध्वन्यभाववादिनां मतम्।

(ख) ध्वनिं भाक्तं मन्यमाना एवं भणन्ति

भक्त्या लक्षणया बोध्यत्वात् ध्वनिर्भाक्तः। तत्र भक्त्या आगतोऽर्थो भाक्त इत्यत्र भक्तिपदेन आलङ्कारिकस्य लक्षणाया, मीमांसकस्य गौणी वृत्तेश्च ग्रहणं भवति। तत्र भक्तिपदेन मुख्यार्थस्य भङ्गो भक्तिः इति व्युत्पत्त्या लक्षणाया मुख्यार्थबाधरूपं प्रथमं बीजम्, भज्यते सेव्यते इति सामीप्यादिसम्बन्धो भक्तिः इति तस्या मुख्यार्थसम्बन्धरूपं द्वितीयं बीजं, शैत्यपावनत्वादौ प्रतिपाद्ये श्रद्धातिशयो भक्तिः इति व्युत्पत्त्या च तस्यास्तृतीयं प्रयोजनरूपं बीजं प्रतिपादितं भवति। अतश्च भक्त्या मुख्यार्थबाधादिबीजस्थले लक्षितमर्थं भाक्तं कथयन्ति।

मीमांसकेन स्वीकृताया लक्षणातो विलक्षणाया गौणवृत्तेरपि अनया भक्त्या ग्रहणं भवति, यतो **गुणसमुदायवृत्तेः शब्दस्य अर्थभागस्तैक्ष्ण्यादिः भक्तिः** इत्यनया भक्तिशब्दस्य चतुर्थव्युत्पत्त्या **अग्निर्माणवकः** इत्यादौ तैक्ष्ण्यादिगुणविशिष्टव्यक्तिविशेषवाचकगुण-समुदायवृत्तेरग्निशब्दात् तदर्थ- भागतीक्ष्णतादिग्रहणं भक्तिः तत आगतो गौणोऽर्थो भाक्त इति तैः प्रतिपाद्यते।

(ग) ध्वनेरस्तित्वेऽपि तस्य सहृदयहृदयमात्रसंवेद्यतया गिरामगोचरतया न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तः करणेन गृह्यते इत्यनुसारात् ध्वनेरनिर्वचनीयत्वमेवेति अनिर्वचनीयतावादिनो वदन्ति।

एतद्ध्वनिविरोधिमतत्रयं पल्लवयता अलङ्कारसर्वस्व टीकाकृता जयरथेन ध्वनिविरोधीनि द्वादशमतानि प्रतिपादितानि। एतेषां निराकरणात् ध्वनिसद्भावसमुज्ज्वलप्रमोदावहे ध्वनिकाव्यमार्गे सानन्दं मनीषिणो विहरन्तः समुल्लसन्ति। तानि च ध्वनिविरोधिमतानि सन्ति-

**तात्पर्यशक्तिरभिधा लक्षणानुमिती द्विधा।**
**अर्थापत्तिः क्वचित् तन्त्रं समासोक्त्याद्यलङ्कृतिः॥**

**रसस्य कार्यता भोगो व्यापारान्तरबाधनम्।**
**द्वादशेत्थं ध्वनेरस्य स्थिता विप्रतिपत्तयः[१]॥**

### (१) तात्पर्यशक्तिः

अभिहितान्वयवादिभिः पूर्वमीमांसकैरुद्भावितया **यावत् कार्यप्रसारित्वात् तात्पर्यं न तुलाधृतम्** इत्येवं प्रकारेण धनञ्जयधनिकाभ्यां प्रतिपादितया तात्पर्यशक्त्यैव ध्वन्यर्थबोधो भवेद् ध्वननव्यञ्जनव्यापारो न मन्तव्यः इति पूर्वपक्षं समुद्भाव्य ध्वनिवादिनः तन्मतं निराकुर्वन्तः कथयन्ति यत् **अन्वयमात्रबोधिका** अभिहितान्वयवादिनां द्वितीयकक्षावगाहिनी तात्पर्यशक्तिः वाच्यार्थतात्पर्यार्थलक्ष्यार्थेभ्यो विलक्षणं चतुर्थकक्षावगाहिनं ध्वन्यर्थं प्रकाशयितुं न शक्नोति। यदि च अभिधा **तात्पर्यलक्षणाभ्यो** व्यतिरिक्तश्चतुर्थः तात्पर्यव्यापारस्तदवगतये स्वीक्रियेत तर्हि नाम मात्रे विवादः, ध्वनितात्पर्ययोः समानकार्यकारित्वात् समानफलजनकत्वाच्च।

### (२) अभिधा

**यत्परः शब्दः स शब्दार्थः** इति मनसि निधाय अन्विताभिधानवादी **दीर्घदीर्घतरोऽभिधाव्यापारः** इति शरवद्दीर्घदीर्घतरमभिधाव्यापारं मन्वानः अभिधयैव ध्वन्यर्थस्याप्यवगत्या ध्वनिव्यापारो न स्वीकार्य इति वदति। प्रतीयमानार्थे शब्दस्य समयाभावात् तदर्थावगतेरसम्भावात् **शब्दबुद्धिकर्मणां विरम्य व्यापाराभावः** इति सर्वतन्त्रसिद्धान्तात् दीर्घदीर्घतराभिधाव्यापारस्य असङ्गतत्वाच्च अभिधया ध्वन्यर्थावगतिर्नैव भवितुमर्हति[१४]।

---

१. ध्वन्या० लोचने पृ० २२ तथा काव्यप्रकाशे पञ्चमोल्लासे।

(३) **लक्षणारूपया भक्त्या**

(४) **गौणरूपया वा भक्त्या बोध्यो भाक्तलक्ष्यरूपोऽर्थ एव् ध्वन्यर्थः**। अतः भक्त्यैव ध्वन्यर्थावगतेः व्यञ्जनाया नास्ति काप्यावश्यकता इति मतमित्थं खण्डयन्ति ध्वनिवादिनः। तत्र भक्तौ ध्वनिं गतार्थयितुं पूर्वपक्षिणां त्रयो विकल्पाः सम्भवन्ति।

(क) **भक्तिरेव ध्वनिः** इत्युभयोरभेदान्नास्ति ध्वनिरिति प्रथम-विकल्पं दूषयति

**भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः**[1]।

अर्थात् घटकलशयोरिव भक्तिध्वन्योरभेदो न भवितुमर्हति। यतः वाच्यव्यतिरिक्तस्यार्थस्य वाच्यवाचकाभ्यां तात्पर्येण अर्थप्रकाशनं यत्र व्यङ्ग्यप्राधान्ये स ध्वनिः। उपचारमात्र[2] तु भक्तिः इति भक्तिध्वन्योः स्वरूपभेदात् पर्यायवत् अभेदो न स्यात्।

(ख) पृथिव्या गन्धवत्त्वमिव ध्वनेर्भक्तिर्लक्षणमिति द्वितीय-विकल्पं खण्डयन्नाह

**अतिव्याप्तेरथाव्याप्तेर्न चासौ लक्ष्यते तया**[3]॥

अर्थात् अव्याप्त्यतिव्याप्तिदोषग्रस्ततया भक्तिः ध्वनेर्लक्षणं नैव भवितु- मर्हति। तथा हि-भक्तिर्यदि ध्वनेर्लक्षणं स्यात् तर्हि ध्वन्यभावस्थले निरूढलक्षणायां, व्यङ्ग्यजनितसौन्दर्यरहिते उपचरितप्रयोगे च अतिव्याप्तिः। विवक्षितान्यपरवाच्ये अभिधामूले रसादिध्वनौ मुख्यार्थबाधादेरभावात् लक्षणां (भक्तिं) विनैव रसादेः प्रतीत्या तत्र लक्ष्यैकदेशवृत्तित्वरूपा व्याप्तिश्च। अन्यच्च **गङ्गायां घोषः** इत्यादौ **भक्तेर्विषयः** तटादिः, तथा ध्वनेर्विषयः शैत्य- पावनत्वादिः। विषयभेदात् भक्तिध्वन्योर्धर्मधर्मिभावो न भवितुमर्हति। यतो धर्मगतः कश्चिद्

---

१. ध्वन्या० १, १७

२. उपचारो गुणवृत्तिर्लक्षणा उपचरणमतिशयितो व्यवहारः। लोचने पृ० ६०।

३. ध्वन्या० १, १७

धर्मविशेष एव लक्षणं भवति। भक्तिध्वन्योश्च धर्मधर्मिभावाभावात् भक्तिर्न ध्वनेर्लक्षणम्। अपरञ्च अभिधापुच्छभूता वाचकाश्रिता भक्तिः व्यञ्जकाश्रितध्वनेर्लक्षणं भवितुमर्हति।

(ग) यथा च भक्तिर्ध्वनेरसाधारणधर्मवत्त्वरूपं लक्षणं न भवति, तथैव काकवद्देवदत्तस्य गृहम् इत्यादिवत् अवर्तमानव्यावर्तकधर्मरूपम् उपलक्षणमपि न भवति। यतो ध्वनेरनेकप्रभेदमध्यादन्यतमस्य भेदस्य यदि भक्तिरुपलक्षणं स्यात्, गुणवृत्त्यैव च यदि तस्य ग्रहणं स्यात्, तर्हि अभिधा व्यापारेणैव समग्रालङ्कारवर्गस्य लक्षितत्वात् प्रत्येकमलङ्काराणां लक्षणकरणे वैयर्थ्यमेव। अतो भक्तिर्नैव ध्वनेर्लक्षणं नाप्युपलक्षणम्।

५. **स्वार्थानुमानपरार्थानुमानेष्वनुमानद्वयेनैव**

६. **रसवस्त्वलङ्काररूपस्य ध्वनेरनुमित्या अनुमेयरूप एव ध्वन्यर्थः** इति शङ्कुकमहिमभट्टादिमतं दूषयता ध्वनिवादिना प्रतिपाद्यते–

लिङ्गलिङ्गिभावसम्बन्धेन **दुष्यन्तोऽयं शकुन्तलाविषयकरतिमान् शकुन्तलारूपविभावादिमत्त्वात्, विलक्षणकटाक्षादिमत्त्वाद् वा यो नैवं स नैवं यथाऽहम्** इत्यनुमानात् रसध्वनेरनुमेयत्वकथनं न साम्प्रतम्। यतो हि पूर्वोक्तानुमानेन प्रतीतो रसो वस्तुतो रस एव नास्ति रसस्तु सहृदयहृदयेऽनुभूयमानः प्रत्यक्षात्मकोऽलौकिकानन्दः। अन्यच्च पूर्वोक्तानुमाने व्यतिरेकदृष्टान्तेन सहृदयस्यैव रसानुभवप्रतिषेधो भवति। एवमेव वस्तुध्वनिस्स्थले

**भ्रम धार्मिक विश्वस्तस्स श्वाद्य मारितस्तेन।**
**गोदावरीनदीकच्छकुञ्जवासिना दृप्तसिंहेन॥**

इत्यादौ गोदावरीतीरं भीरुभ्रमणायोग्यं भयकारणसिंहोपलब्धेः, यद् यद् भीरुभ्रमणयोग्यं तत्तद् भयकारणाभाववत्, यथा गृहम् इत्याद्यनुमानेन भ्रमणनिषेधरूपं वस्तु व्यङ्ग्यस्यानुमेयत्वमपि नैव संभाव्यते व्यभिचारासिद्धबाधितरूपहेत्वाभासेन तद्धेतोः दुष्टत्वात्।

एवमेवालङ्कारध्वनिस्थले–

**लावण्यकान्तिपरिपूरितदिङ्मुखेऽस्मिन्**
**स्मेरेऽधुना तव मुखे तरलायताक्षि!**
**क्षोभं यदेति न मनागपि तेन मन्ये**
**सुव्यक्तमेव ज( ड )लराशिरयं पयोधिः।[१]**

इत्यादौ तन्वीवदनारविन्दं चन्द्रतुल्यं चन्द्रो वा (पयोधौ क्षोभात्) क्षोभाभावेन जडत्वात्, इत्याद्यनुमानेन उपमारूपकादिध्वनेरनुमेयत्वमपि न युक्तं, समुद्रे क्षोभस्य कारणान्तरतोऽपि सम्भवात् हेतोर्व्यभिचारात्।

(७) **अर्थापत्तिः**

उपपाद्यज्ञानेन उपपादकस्य अर्थस्य आपत्तिः कल्पनमर्थापत्तिः। येन विना यदनुपपन्नं तत् तेनाक्षिप्यते इति रीत्या पीनश्चैत्रो दिवा नात्ति इत्यत्र भोजनं विना पीनत्वानुपपत्त्या रात्रिभोजनं यथा अर्थपत्त्या प्रतीयते, तथैव

**निश्शेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो**
**नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः॥**
**मिथ्यावादिनि दूति! बान्धवजनस्याज्ञातपीडागमे**
**वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्[२]॥**

इत्यादौ अधमपदप्रकाशितो ध्वनिवादिनां दूत्या नायकसमीपगमनरूपोध्वन्यर्थोऽपि चन्दनच्यवनादेरन्यथानुपपत्त्या नाय-कान्तिकगमनरूपस्यार्थस्य अर्थापत्त्यैव बोधनाद्विधिरूपो वाच्यार्थ एवेति मीमांसकमतं दूषयन् ध्वनिवादी प्राह–

**अर्थापत्तिस्तु नेवेह प्रमाणान्तरमिष्यते।[३]**

---

१. व्यक्तिविवेके पृ०* १८ दशरूपावलोके च पृ० ९४।

२. काव्यप्रकाशे प्रथमोल्लासे।

३. मुक्तावली–का० १४४।

इत्युक्त्या अनुमाने एव अर्थापत्तेर्गतार्थतया यथा अनुमाने ध्वनेरन्तर्भावो न भवति, तथैव अर्थापत्तावपि तस्यान्तर्भावो भवितुं न शक्नोति।

अपरञ्च निश्शेषच्युतचन्दनमित्यादौ चन्दनच्यवनादेः स्नानकार्येणापि सम्भवात् तदन्तिकगमनरूपध्वन्यर्थः अर्थापत्त्या नैव बोध्यो भवेत्। अत एतादृशस्थलेषु पृथग् ध्वन्यर्थो मन्तव्य एव।

(८) तन्त्रम्–

तन्त्रं नाम अनेकार्थबोधनेच्छया पदस्यैकस्य सकृदुच्चारणम्। यथा श्वेतो धावति इत्यत्र श्वेतवर्णः, श्वा इतो धावतीति द्विविधोऽप्यर्थः एकेन श्वेतपदेन बुद्ध्यते, तथैव तथाकथितध्वनिस्थलेऽपि वाच्यार्थस्य ध्वन्यर्थस्य च बोधस्तन्त्रेणैव भविष्यति नास्ति पृथग्ध्वन्यर्थ इति ध्वनिविरोधिनां मतमपि असमीचीनमेव, विधिरूपवाच्यार्थेन निषेधरूपध्वन्यर्थस्य, निषेधरूपवाच्येन विधिरूपव्यङ्ग्यस्य च प्रतीतिः तन्त्रेण न कदापि शक्यसाभवा।

(९) समासोक्त्याद्यलङ्कारः

समासोक्तिः, आक्षेपः, अनुक्तनिमित्तविशेषोक्तिः, पर्यायोक्तं, व्यतिरेकः, अन्योक्तिः, भावः इत्यादिषु अलङ्कारेषु ध्वन्यर्थस्य अन्तर्भावात् नास्ति स्वतन्त्रो ध्वनिरिति मतं सविस्तरं खण्डयता आनन्देन प्रतिपादितं यत् वाच्यवाचकचारुत्वहेतुषु समासोक्त्याद्यलङ्कारेषु व्यङ्ग्यव्यञ्जक-समाश्रयेण व्यवस्थितस्य ध्वनेरन्तर्भावो नैव भवितुमर्हति। वाच्यवाचकचारुत्वहेतवोऽलङ्कारास्तस्य ध्वनेरङ्गभूताः न तु तदेकरूपाः। यतो हि काव्यात्मभूतो ध्वनिः काव्यशरीरभूतशब्दार्थचारुत्वहेतोरलङ्काराद् विलक्षण एव, अतो ध्वनेः गुणालङ्कारव्यतिरिक्तत्वात् पार्थक्यं निर्विवादम्।

## (१०) रसस्य कार्यता

पूर्वतो विद्यमानस्यैव वस्तुनो ध्वन्यमानत्वं भवति, रसस्तु विभावादिभिरुत्पद्यते, अतो रसादेः कार्यत्वम् इति ध्वनिविरोधिनो भट्टलोल्लटादेर्मतं भट्टनायकादिनैव **रसो नोत्पद्यते न प्रतीयते, नाभिव्यज्यते अपि तु भुज्यते**, इत्यादिना सयुक्ति खण्डितं, यच्च पूर्वं विस्तरेण प्रतिपादितमेवेतीह न वितन्यते।

## (११) रसस्य भोगः

ध्वनिविरोधिनो भट्टनायकस्य मते रसो नोत्पद्यते, न प्रतीयते, नाभिव्यज्यते, अपि तु अभिधाव्यापारेण वाच्यार्थबोधोत्तरं भावकत्वव्यापारेण साधारणीकृतविभावादिद्वारा भावितस्य रसोदेर्भोजकत्वव्यापारेण भोगः क्रियते, न तु रसादिरभिव्यज्यते इत्यस्यापि मतस्य पूर्वप्रतिपादितदिशा सयुक्ति खण्डनात् ध्वनिसद्भावः सर्वशास्त्रसिद्ध एव।

## १२. व्यापारान्तरबाधनम्

व्यापारान्तरबाधेन ध्वनिबाधो जायते इति, द्वादशें ध्वनिविरोधिमते व्यापारान्तरशब्दस्याविस्पष्टतयापि कुन्तकस्य विचित्राभिधारूपव्यापारान्तर-मेवात्र स्वीकरणीयम्। वक्रोक्तिरूपेण विचित्राभिधाव्यापारेण सर्वोऽपि ध्वन्यर्थः प्रतिपाद्यते इति मन्यमानस्य कुन्तकस्य मतं जयरथात् पूर्वमेव प्रसिद्धिमगात्। अत एतन्मतस्यैव ग्रहणं जयरथेन स्वकीयसंग्रहकारिकायां कृतमिति कथनं समीचीनम्। किन्तु कुन्तकस्य विचित्राभिधाव्यापारेणापि चतुर्थकक्षावगाहिनो ध्वन्यर्थस्यावगतिः नैव भवितुमर्हति । यदि नाम प्रसिद्धाभिधातो विलक्षणा इयं विचित्राभिधा तर्हि नाम मात्रे विवादः। एतद् विवेचनं वक्रोक्तिप्रकरणे विहितमिति तत्रैव द्रष्टव्यम्।

एवं हि ध्वनिवादिनः द्वादशानां विप्रतिपत्तीनां खण्डनं विधाय न केवलं निषेधमुखेन ध्वनितत्त्वं समस्थापयन्, अपि तु परमानन्दजनकं लवण्यमयं तत् स्वरूपं प्रदर्शयन्तो निम्नप्रकारेण विधिमुखेनापि तत्स्वरूपं न्यरूपयन्।

तथाहि–

**बोद्धृस्वरूपसंख्यानिमित्तकार्यप्रतीतिकालानाम्।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधेयतो व्यङ्ग्यः॥**[1]

अर्थात् बोद्धृस्वरूपादीनां भेदात् वाच्यार्थाद् व्यङ्ग्यार्थः सर्वथा भिन्नोऽस्ति।

यथा–

**(१). बोद्धृभेदात्–**

वाच्यार्थस्य पदपदार्थमात्रज्ञाननिपुणैर्वैयाकरणैः वेद्यतया व्यङ्ग्यार्थस्य च सहृदयैः संवेद्यतया वाच्याद् व्यङ्ग्ये भेदः।

**२. स्वरूपभेदात्–**

**भ्रम धार्मिकविश्वस्तःस श्वाद्य मारितस्तेन।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥**[2]

इत्यत्र वाच्यार्थो विधिरूपः व्यङ्ग्यार्थश्च निषेधरूपः तथा

**निश्शेषच्युतचन्दनम्** इत्यादौ वाच्यार्थः निषेधरूपः व्यङ्ग्यार्थश्च विधिरूप इति वाच्यव्यङ्ग्ययोः स्वरूपे भेदः।

**३. संख्याभेदात्–**

**गतोऽस्तमर्कः** इत्यादौ एकरूपो वाच्यार्थः। व्यङ्ग्यार्थस्तु तत्तद् बोद्ध्रादिभेदात् क्वचित् **कान्तमभिसर** इति, **गावो निरुध्यन्ताम्** इति **नायकस्यायमागमनावसरः** इत्यादिरूपेण अनेक इति संख्याभेदः।

**४. निमित्तभेदात्–**

वाच्यार्थः शब्दसङ्केतज्ञानमात्रेण बोध्यः व्यङ्ग्यार्थस्तु विशिष्टप्रतिभानैर्मल्यात् संवेद्य इति निमित्तभेदाद्भेदः।

---

१. साहित्यदर्पणे ५, २।
२. ध्वन्या० १, ४, कारिकायाम्।

(४) **कार्यभेदात्–**

अभिधाया अभिधेयप्रतीतिमात्रं कार्यम् व्यञ्जनायाश्चमत्कारानुभूतिश्चेति कार्यभेदाद्भेदः

(६) **प्रतीतिभेदात्–**

वाच्यार्थः केवलमर्थप्रतीतिं कारयति, व्यङ्ग्यार्थश्च चमत्कारंप्रतीतिं जनयतीति उभयोः प्रतीत्योर्भेदः।

(७) **कालभेदात्–**

वाच्यार्थबोधः पूर्वं व्यङ्ग्यार्थबोधश्च पश्चादिति उभयोर्ज्ञानयोः कालभेदः।

(८) **आश्रय भेदात्–**

अभिधायाः शब्दमात्रमाश्रयः। व्यञ्जनायास्तु शब्द-तदेकदेशवर्णचेष्टादिरूपो विभिन्न आश्रयः इत्याश्रय-भेदाद् वाच्याद् व्यङ्ग्ये भेदः।

९. **विषयभेदात्–**

**कस्य वा न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम्।**
**सभ्रमरपद्माघ्रायिणि! वारितवामे! सहस्वेदानीम्॥**[१]

इत्यत्र वक्त्र्याः सखीनायिकाविषयकः वाच्यार्थः **भ्रमरेण दष्टाधरेयं, न पुनः परकामुकेन'** इति व्यङ्ग्यन्तु कान्तविषयकम् इति विषयभेदादभिधेयतो व्यङ्ग्यो भिन्न इति निश्चितम्।

१०. **आदिपदात् वक्तृप्रकरणादिभेदादपि** वाच्यव्यङ्ग्ययोः भेदो दृश्यते। एवञ्च एतेषु स्पष्टेषु भेदेषु सत्सु यदि वाच्यव्यङ्ग्ययोर्भेदो नाङ्गीक्रियते तर्हि नीलपीतादिप्रत्यक्षविषयेऽपि भेदो न स्यात्।

अयमेव हि सहृदयश्लाघ्ये रसवस्त्वलङ्काररूपेण त्रिविधो

---

१. साहित्यदर्पणे ५, २, कारिकायाम्

ध्वनिरूपोऽर्थः काव्यस्यात्मा इति सिद्धान्तयन् आनन्दवर्धनाचार्यः उपसंहरति—

नित्याक्लिष्टरसाश्रयोचितगुणालङ्कारशोभादृतो
यस्माद् वस्तु समीहितं सुकृतिभिः सर्वं समासाद्यते।
काव्याख्येऽखिलसौख्यधाम्नि विबुधोद्याने ध्वनिर्दर्शितः
सोऽयं कल्पतरूपमानमहिमा भोग्योऽस्तु भव्यात्मनाम्।।[१]

सत्काव्यतत्त्वविषयं स्फुरितप्रसुप्त-
कल्पं मनस्सु परिपक्वधियां यदासीत्।
तद्व्याकरोत् सहृदयोदयलाभहेतो-
रानन्दवर्धन इति प्रथिताभिधानः।।[२] इति

इदमत्र ध्यातव्यम्—

आनन्दवर्धनाचार्यस्य रसवस्त्वलङ्काररूपस्त्रिविधोऽपि ध्वनिः काव्यस्यात्मा। किन्तु एतद्व्याचक्षाणेन लोचनकारेण आचार्याभिनवगुप्त-पादेन तेन रस एव वस्तुतः काव्यस्यात्मा वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टावित्यभिप्रायेण ध्वनिः[३] काव्यस्यात्मा इति सामान्येनोक्तम्[४] इत्येवं प्रतिपादयता वस्तुतो रसध्वनेरेव काव्यात्मत्वं सुनिश्चितम् इत्यस्य युक्तायुक्तत्वमन्तिमे प्रकरणे सुधीभिराकलनीयमिति शम्।

---

१. ध्वन्या० ४; १६ कारिकायाम्।

२. तत्रैव।

३. १. ध्वन्यते इति ध्वनिः रसवस्त्वलङ्कारादिरूपः।
   २. ध्वनतीति ध्वनिः व्यञ्जकःशब्दः।
   ३. एवमेव ध्वनतीति व्यञ्जकार्थो ध्वनिः।
   ४. ध्वन्यते अनेन इति व्यञ्जनाव्यापाररूपो ध्वनिः।
   ५. ध्वन्यते अस्मिन्निति ध्वनिकाव्यम् इत्येवं पञ्चसु अर्थेषु प्रयुक्तस्य ध्वनि-शब्दस्य प्रकरणात् तात्पर्यं ग्राह्यम्।

४. ध्वन्या १, ५ कारिकायाम्।

# वक्रोक्तिविच्छित्तिमीमांसा

वैदग्ध्यभङ्गीभाणितिर्वक्रोक्तिर्या प्रकीर्तिता।
काव्यानां सैव वक्रोक्तिः परा भूषा सुनिश्चिता ॥१॥

काव्यं जीवति वक्रोक्त्या तयैवास्वाद्यते भृशम्।
कुन्तको मन्यते तस्माद् वक्रोक्तिं काव्यजीवितम् ॥२॥

भामहेन यथा प्रोक्ता सर्वालङ्कारररूपिणी।
आनन्दाभिनवाद्यैश्च तद्रूपेण समर्थिता ॥३॥

यतोऽनया विभाव्यन्ते काव्यार्थास्तु रसाप्तये।
अतोऽस्या महिमा नित्यं गीयते काव्यविज्जनैः॥४॥

वागीशमहिता सेयं वक्रोक्त्यतिशयाह्वया।
दण्डिनाराधिता काव्ये कवीनां कामधुङ्मता॥ ५॥

एवं वक्रोक्तिमाहात्म्यं स्वीकुर्वाणेन धीमता।
कुन्तकेन विशेषेण काव्ये वक्रोक्तिरीप्सिता॥६॥

पदे पदार्थे वाक्ये च वाक्यार्थेऽलङ्कृतौ तथा।
प्रबन्धेऽथ प्रकरणे काव्यार्थविषयेषु च॥७॥

वक्रताजन्यविच्छित्तिर्नान्यथा जायते यतः।
विच्छित्तिमूला सर्वत्र वक्रता काम्यते सतः॥८॥

वक्रता-साधकं यद्यत् तत्त्वं काव्यस्य कीर्तितम्।
तत्सर्वं कुन्तकेनात्र न्यरूपि स्वमतानुगम् ॥९॥

काव्ये काव्यत्वमायाति वक्रोक्त्या नात्र संशयः।
अतो वक्रोक्तिमार्गोऽस्ति काव्यशास्त्रे विलक्षणः ॥१०॥

लोकव्यवहारे सरलतया अर्थं बोधयितुकामो लोकः वाक्यं प्रयुङ्क्तेशास्त्रे इतिहासपुराणादौ च एवमेव सारल्येन विस्पष्टमर्थं बोधयितुं वाक्यानि प्रयुज्यन्ते। तत्र प्रयोगे वाक्यार्थे चमत्कारावगमनं प्रयोजनं न भवति। अतस्तेषु वाक्येषु काव्यत्वव्यवहारो न भवति। अमीषु वाक्येषु तदर्थकानि यानि कान्यपि अन्यानि पदानि आधातुं शक्यन्ते। किन्तु काव्ये विशिष्टेन शब्देन विशिष्टार्थकेन, विशिष्टेन च प्रकारेण भावोऽभिधीयते। शब्दस्य वैशिष्ट्यं तद्गतलालित्यं, तस्य परिवृत्त्यसहत्वं भवति। अर्थस्य वैशिष्ट्यं तद्भावानुकूलत्वं, तस्य माधुर्यं, श्रोतुर्मानसे प्रमोदजनकत्वञ्च भवति। कथनप्रकारस्य वैशिष्ट्यं लोकप्रयोगभिन्नत्वं, शांस्त्रीयप्रयोगमार्गभिन्नत्वञ्च वैचित्र्यरूपं भवति। अयमेव **विच्छित्तिजनककथनप्रकारः विचित्राभिधा वा वक्रोक्तिरित्युच्यते। अर्थात् शास्त्रलोकव्यवहारयोः शब्दार्थयोः प्रसिद्ध- कथनप्रकाराद् विलक्षणः अपूर्वचमत्कारोत्पादकः कथनप्रकारो वक्रोक्तिः।**

इमामेव वक्रोक्तिं वक्रोक्तिप्रस्थानप्रतिष्ठापकः कुन्तकाचार्यः **वैदग्ध्यभङ्गीभणितिः वक्रोक्तिः**[१] इत्येवं परिभाषते। **विदग्धः** प्रतिभासम्पन्नो व्युत्पन्नः सुकविः। **तस्य भावः** वैदग्ध्यम्। सुकविकर्मकौशलं। वैदग्ध्यस्य सुकविकर्मकौशलस्य भङ्गी विच्छित्तिः, शोभा, अपूर्वचमत्कारः एतया भङ्ग्या विच्छित्त्या भणितिः अभिधानं कथनंवक्रोक्तिः भवति। अर्थात् सुकवेः **काव्यनिर्माणकौशलेन चमत्कारजनकः विचित्रकथनप्रकारः वक्रोक्तिरिति** फलितार्थो जायते।

कुन्तकाचार्यः **वक्रोक्तिजीविते** प्रकारान्तरेण अनेकत्र मुख्यतः त्रिषु स्थानेषु विचित्राभिधायकविचित्रशब्दं व्याचचक्षे। तथाहि–

(१) **शास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यक्तिरेकि** अर्थात् शास्त्रादौ प्रयुक्तशब्दार्थयोः साधारणप्रयोगात् भिन्नकथनं विचित्राभिधानमस्ति। अत्र प्रसिद्धंशास्त्रपुराणादौ प्रयुक्तमिति फलति।

---

१. वक्रोक्तिजीविते १, १०।

(२) **प्रसिद्धप्रस्थानव्यतिरेकिवैचित्र्यम्**[1] **प्रसिद्धप्रस्थानातिरेकिणा वैचित्र्येण**[2]। अर्थात् शब्दार्थप्रयोगस्य प्रसिद्धमार्गाद् भिन्नमेव विचित्रम्।

(३) **अतिक्रान्तप्रसिद्धव्यवहारसरणि**[3] अर्थात् सामान्यलोकव्यवहारे प्रचलितशब्दार्थयोः प्रयोगाद् भिन्नम्। अत्र प्रसिद्धस्यार्थः लोकव्यवहारः।

अतः शास्त्रलोकव्यवहारयोः प्रयुक्तशब्दार्थयोर्यादृशी रचना भवति ततो विलक्षणा शब्दार्थोक्तिः विचित्रोक्तिरेव वक्रोक्तिरिति पर्यवसितोऽर्थः। अत्र **विचित्रस्य** प्रसिद्धकथनप्रकाराद् भिन्नरूपः इत्यर्थस्तु अभावात्मको भवति। भावात्मकस्य विचित्रस्यार्थस्तु **कविकर्मकौशलजन्यचमत्कारेणयुक्त** इत्येवं रूपो जायते।

कुन्तकानुसारं कविकर्मकौशलस्यार्थः कविव्यापारः। कविव्यापारो नाम कविप्रतिभाश्रितं कर्म। **प्रतिभायास्तात्पर्यन्तु प्राक्तनाद्यतनसंस्कारपरिपाकप्रौढा काचित् कविगता शक्तिः** एवं हि प्राक्तनाद्यतनजन्मसंस्कारपारिपाकप्रौढ़कविशक्तिरूपप्रतिभाजन्यकविकर्म कौशलेन चारुत्वपूर्णकथनं वक्रोक्तिरिति फलितम्। अयमेव विचित्ररूपाया वक्रोक्तेः भावात्मकोऽर्थः कुन्तकाभिप्रेतः इत्यवधेयम्। अस्मिन्नेवार्थे च सहृदयहृदयाह्लादकारित्वं भवति यच्च कविकर्मकौशलस्य साफल्यं सूचयति। कवेः साफल्यं न केवलं प्रसिद्धप्रस्थानव्यतिरेकि शब्दप्रयोगेणैव सम्पद्यते, अपि तु तादृशप्रयोगद्वारा सहृदयमाह्लादयन्ती एव वक्रोक्तिः स्वप्रयोजनसिद्धौ सफला भवति।

---

१. १, ७, का वृत्तिः।
२. तत्रैव १. १८ का वृत्तिः।
३. तत्रैव।

एवञ्च उपर्युक्तविवेचनेन वक्रोक्तेः त्रिविधानि मूलतत्त्वानि प्रतिपादितानि भवन्ति–

(१) शास्त्रलोकव्यवहारप्रसिद्धशब्दार्थप्रयोगभिन्नत्वम्।

(२) प्राक्तनाद्यतनप्रतिभाजन्यचमत्कारजनकत्वम्।

(३) सहृदयहृदयाह्लादसम्पादनक्षमत्वम्।

अत एव कुन्तकाचार्यः–

शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।
बन्धे व्यवरभस्थितौ काव्यं तद्विदाह्लादकारिणि॥[१]

इति स्वकीये काव्यलक्षणे उपर्युक्तानि त्रिविधान्यपि तत्त्वानि प्रदर्शयति।

शब्दार्थयोः सम्बन्धस्य नित्यतया तयोः साहित्यस्य विद्यमानत्वेऽपि काव्यस्वरूपनिष्ठशब्दार्थयोः किमपि विशिष्टसाहित्यमपेक्षितं भवतीति प्रतिपादयन् स साहित्यमित्थं व्याचष्टे–

साहित्यमनयोश्शोभाशालितां प्रति काप्यसौ ।
अन्यूनानतिरिक्तत्वमनोहारिण्यवस्थितिः॥[२] इति

अथात् काव्यप्रयुक्तशब्दार्थयोः शोभाजनकतया सर्वथा समानरूपात्मकं सहावस्थानं भवति, यत्र शब्दः अर्थात् अन्यूनतया, अर्थश्च शब्दादन्यूनतया समरूपेणैव विलसन्तौ कामपि विच्छित्तिं जनयतः। कविव्यापारवक्रतयैव काव्यबन्धस्य साफल्यं विच्छित्तिजनकत्वरूपं भवतीति कुन्तकस्य स्पष्टं मतम्।

आचार्यकुन्तकस्य एषा वक्रोक्तिः काव्यसाम्राज्यस्य महाराज्ञी, यस्या वक्रतायाः समुचितविधानेन, अनुशासनेन च काव्यराज्यं सुसमृद्धं सत्

---

१. तत्रैव १, ७।
२. तत्रैव।

सुशोभते। यद्यपि वक्रताया आनन्त्येन तस्या इदमित्थन्तया गणना नास्ति शक्यसम्भवा, तथापि मुख्यतया प्राथम्येन वक्रतायाः षट्प्रकारा एतेन स्वीक्रियन्ते येषां प्रत्येकं भेदस्य विभिन्नाः शोभाशालिनः प्रभेदा भवन्ति। तथहि–

**कविव्यापारवक्रत्वप्रकाराः संभवन्ति षट्।**
**प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः॥**

**वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता।**
**वक्रताया परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः॥**

**वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति॥**

**वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः।**
**उच्यते सहजाहार्यसौकुमार्यमनोहरः।**

इत्येवं प्रतिपादनात्

१. वर्णविन्यासवक्रता,

२. पदपूर्वार्द्धवक्रता,

३. पदपरार्द्धवक्रता,

४. वाक्यवक्रता,

५. प्रकरणवक्रता,

६. प्रबन्धवक्रता इति

षट्सु प्रकारेषु त्रिविधायां वर्णविन्यासवक्रतायामन्यैराचार्यैः प्रतिपादिताः अनुप्रासयमकादयः वर्णशब्दालङ्काराः, माधुर्यादयो गुणाः, उपनागरिकापरुषाकोमलादयो वृत्तिविशेषाः, वैदर्भीगौडीपाञ्चाल्याद्या रीतयः अन्तर्भवन्ति। वर्णविन्यासवक्रतयाः

---

१. तत्रैव १. १८-२१।
२. तत्रैव २, १।

·औचित्यपूर्णविधानार्थं तत्र षण्नियमाः प्रदर्शिता येषां सम्यगनुसरणेनैव कविः समभीप्सितं फलं भजते। यथा हि आनन्दवर्धनः अलङ्कारविधान-प्रसङ्ग

अलंङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्॥[१]

इति निरदिशत् तथैव कुन्तकोऽप्यत्र निर्दिशति।

धातुप्रातिपदिकरूपंपदपूर्वार्द्धवक्रतयायाः

१. रूढिवैचित्र्यवक्रता,

२. पर्यायवक्रता,

३. उपचारवक्रता,

४. विशेषणवक्रता,

५. संवृतिवक्रता,

६. वृत्तिवक्रता,

७. लिङ्गवैचित्र्यवक्रता,

८. क्रियावैचित्र्यवक्रता

इत्येवं रूपा अवान्तरभेदसहिता अष्टौ प्रभेदा भवन्ति।

(ग) सुप्ङिविभक्तिविषयकवक्रतारूपपदपरार्द्धवक्रतायाः

१. कालवैचित्र्यवक्रता,

२. कारणवक्रता,

३. वचनवक्रता,

---

१. तत्रैव २, ८-२५।

४. पुरुषवक्रता,

५. उपग्रहवक्रता,

६. प्रत्ययवक्रता

उपसर्गवक्रता, निपातवक्रता, इति षट् प्रभेदा भवन्ति।[१]

(घ) पदसमूहरूपवाक्यवक्रतायाः सहजाहार्येति प्रभेदद्वयं भवति।।[२]

(ङ) सहजाहार्यसौकुमार्यैर्मनोहरवक्रता यदा वाक्यसमुदाये विच्छित्तिं जनयति तदेयं प्रकरणवक्रतेति नाम्ना प्रथते। प्रबन्धैकदेशे प्रकरणे इयं वक्रतानेकैः प्रकारैः सम्पाद्या भवति। यथा

१. क्वचिद्भावपूर्णपरिस्थितेरुद्भावनया,

२. क्वचिदविद्यमानवस्तुनः कल्पनया, क्वचिद् विद्यमानस्य संशोधनेन, उत्पाद्यलावण्याद्वा,

३. कुत्रापि प्रधानकार्यसम्बद्धप्रकरणस्य उपकार्योपकारकभावात्,

४. कुत्रचित् विशिष्टप्रकरणस्यातिरञ्जनात्

५. क्वापि जलक्रीडासन्ध्योत्सवर्तुप्रभृतिरोचकप्रसङ्गानां विस्तरेण वर्णनात्,

६. कुत्रापि प्रधानप्रयोजनसिद्ध्यर्थम् अप्रधानस्यापि सुन्दरप्रसङ्गस्योद्भावनात्,

७. क्वचित् गर्भाङ्कस्य विधानात्,

मुखप्रतिमुखादिपञ्चसन्धीनां संविधानेन प्रकरणवक्रता निष्पाद्यते काव्ये।[३]

---

१. तत्रैव २, २६-।

२. तत्रैव ३, १-४।

३. तत्रैव ४, १-१५।

(च) यत्र वाच्यवाचकरचनाप्रपञ्चचारुचमत्कृतकाव्यशरीरे सहृदयहृदयानन्दमाधातुं रामायणमहाभारतादिवर्णनप्रसिद्धरससम्पद्वस्तूनि समुपेक्ष्य महाकाव्यनाटकादिप्रबन्धेषु रमणीयरसान्तरेण प्रबन्धस्य समापनं भवति तत्र प्रबन्धवक्रता भवति। अस्या अपि

१. मूलरसपरिवर्तनवक्रता,

२. समापनवक्रता,

३. कथाविच्छेदवक्रता,

४. आनुषङ्गिकफलवक्रता,

५. नामकरणवक्रता,

६. तुल्यकथावक्रतेति[१] षट् प्रभेदाः भवन्ति।

एवं हि भेदप्रभेदैः सह षड्विधानां वक्रतानां प्रतिपादनं विधाय **प्रतिभाया आनन्त्येन कविप्रतिभया जायमानानां वक्रतानां महाकविप्रवाहे आनन्त्यं भवतीति सहृदयैः स्वयमेव समुत्प्रेक्षणीयम्**[२] इत्यभिदधानः कुन्तकाचार्यः काव्ये वक्रोक्तेर्महत्त्वपूर्णं साम्राज्यं स्थापयामास।

लोकव्यवहारभिन्नस्य विच्छित्तिजनककथनप्रकारस्यास्य वक्रोक्तिरूपस्य प्रमोदजनकत्वं सहृदयैरप्रत्यक्षं नास्ति। मार्ग निपुणस्य महाकवि बाणभट्टस्य 'हर्षचरिते' अस्या वक्रोक्ति वक्रोक्तेश्चमत्कार-मनुभवन्ति सहृदयाः, यथा-

उपशोणं मुनिशापव्याजेन निवसन्तीं सावित्रीं सरस्वतीं च द्रष्टुकामं दधीचिमभिलक्ष्य सावित्री हर्षचरिते यथा तन्नामग्रामदिविषयकं प्रश्नं

---

१. तत्रैव ४, १६-२६।
२. तत्रैव १, १९ का० वृत्तौ।

पृच्छति- **कानि वा अस्य पुण्यभाञ्जि भजन्ति अभिख्यामक्षराणि? अत्रागमनेन अपुण्यभाक् कतमो विक्रमजृम्भितविरहव्यथया शून्यतां नीतो देशः**[१] इति किमस्य नाम, कुतोऽयमागच्छतीति नामग्रामविषयको व्यावहारिकः साधारणप्रश्नः वक्रोक्त्या पृष्टः कीदृशमनिर्वचनीयं चमत्कारं जनयतीत्यनुभवन्ति सहृदयाः। उपविश्यताम् इति स्थाने आसनमलङ्क्रियतामिति कथनप्रकारः कस्यागन्तुकस्य परमानन्दाय न प्रकल्पते? अत एव इतः पूर्ववर्तिनोऽपि महाकवयः आचार्याश्च वक्रोक्तेर्विच्छित्तिजनकत्वं महत्त्वं च जानानाः अस्याः स्वरूपं, कार्यं प्रभावञ्च निर्दिशन्ति स्म।

भामाहाचार्येण-

**सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥**

इति वक्रोक्त्यैव काव्यार्थस्य रसमयीकरणं भवतीति मन्यमानेन-

**वाचां वक्रार्थशब्दोक्तिरलङ्काराय कल्पते।**

इत्येवं प्रकारेण वक्रोक्तेः कार्यं महत्त्वञ्च प्रदर्शयाञ्चक्राते।

अत एव वक्रोक्तिमार्गनिपुणानां

**सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः।**
**वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा॥**[३]

इति समुल्लिखितानां महाकवीनां काव्यजगति यशो गीयते।

भामहमनुसरता आचार्यदण्डिना तु स्वभावोक्तिभिन्नां चमत्कारपूर्णां सर्वामेवोक्तिं वक्रोक्तिं मन्वानेन लोकसीमातिवर्तिनी वागीशमहिता

---

१. हर्षचरिते कथामुखे भागे पृ० ६५। कालि० सं०)
२. भामहालङ्कारे २, ८५।
३. तत्रैव १, ६।
४. तत्रैव ५, ६६।
५. राघवपाण्डवीये १, ४१।

अलङ्कारोत्तमा अलङ्कारान्तराणामप्यवलम्बनभूता अतिशयोक्तिरेव वक्रोक्ति रित्युद्घोषितम्।[१]

आनन्दवर्धनाचार्येण वक्रोक्ति र्नाम्ना निर्देशमकुर्वाणेनापि कुन्तकाचार्यस्य काव्यजीवितभूताया वक्रोक्तेराधारत्वं स्थापयता भामहोक्तवक्रोक्तिरूपातिशयोक्तिसम्बन्धे प्रतिपादतिम्- **प्रथमं तावद तिशयोक्तिगर्भता सर्वालङ्कारेषु शक्यक्रिया। कृतैव च सा महाकविभिः कामपि काव्यच्छविं पुष्यतीति कथं हि अतिशययोगिता स्वविषयौचित्येन क्रियमाणा सती काव्ये नोत्कर्षमावहेत्। तत्रातिशयोक्तिर्यमलङ्कारमधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशययोगोऽन्यस्य तु अलङ्कारमात्रतैवेति सर्वालङ्कारस्वीकरणयोग्यत्वेन अभेदोपचारात् सैव सर्वालङ्कार इत्ययमेवार्थोऽवगन्तव्यः।**[२]

ध्वन्यालोकस्य उपजीव्यतयैव वक्रोक्तिजीविते ध्वनिवक्रोक्तितत्त्व-योराधारभूतेषु अनेकत्र एकरूपत्वं दृश्यते।[३]

अभिनवस्य लोचनेनापि **यातिशयोक्तिः लक्षिता सैव सर्वा वक्रोक्तिरलङ्कारप्रकारः सर्वः** इत्येवं पश्यता भामहादिप्रतिपादितदिशा अतिशयोक्तिरूपाया वक्रोक्तेर्महत्त्वमवलोकितम्।[४]

महिमभट्टस्य-

**प्रसिद्धं मार्गमुत्सृज्य यत्र वैचित्र्यसिद्धये।**
**अन्यथैवोच्यते सोऽर्थः सा वक्रोक्तिरुदाहृता।।**[५]

---

१. अलङ्कारान्तराणामप्येकमाहुः परायणम्।
वागीशमहितामुक्तिमिमामतिशयाह्वयाम्।।
काव्यादर्शे २, २०।

२. ध्वन्यालोके ३, ३६ का० वृत्तौ।

३. द्र० काव्यात्ममीमांसा, वक्रोक्तिप्रकरणम्।

४. ध्वन्यालोकः तत्रैव लोचने पृ० २५९-६०।

५. व्यक्तिविवेके १, ६६।

इति कथने वक्रोक्तेस्तदेव रूपं दृश्यते।

शास्त्रे लोके वा प्रयुक्तवचनात् काव्यस्य वैलक्षण्यं प्रदर्शयता भोजराजेनापि–

**यदवक्रं वचः शास्त्रे लोके च वच एव तत्।**
**वक्रत्वं यदर्थवादादौ तस्य काव्यमिति स्मृतिः॥**[1]

इत्यभिदधानेन पूर्वोक्त- वक्रोक्तितत्त्वं समर्थितम्।

**इदमत्रावधेयम्–**

आचार्यकुन्तकस्य वक्रोक्तिकाव्यकल्पलता काव्यस्य सर्वेष्ववयवेषु प्रसर्पन्ती, परिसरन्ती, रसमुद्गिरन्ती परिदृश्यते, तस्या बीजारोपणम्, अङ्कुरणं सिञ्चनं, किसलयनं, विकसनं फलनञ्च पूर्ववर्तिनां कवीनामाचार्याणां च कृतिषु समभूवन्।

महाकविकालिदासस्य–

**वक्रः पन्था यदापि भवतः प्रस्थितस्योत्तराशाम्**[2]

इति कुटिलाद्यर्थकवक्रस्य,

**बाणभट्टस्य–**

**वक्रोक्तिनिपुणेन विलासिजनेन**[3] इत्यादौ वाक्छल-क्रीडालापपरिहासजल्पिताद्यार्थकवक्रोक्तेः **वक्रोक्तिनिपुणेन आख्यायिकाख्यानचतुरेण**[4] इत्यादौ च विच्छित्तिजनककथन-प्रकारार्थकवक्रोक्तेः,

---

१. शृङ्गारप्रकाशे ९, ६०।
२. मेघदूते पूर्वमेघे २७।
३. कादम्बरीपूर्वभागे।
४. तत्रैव।

अमरुकवेः

सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम्॥[1]

इत्यादौ आकूतिविलासादिवचनकवक्रोक्तेः मूलतत्त्वानि समुपलभ्यन्ते।

पूर्वोक्तदिशा भामहानन्दाभिनवमहिमभट्टाद्याचार्याणं ग्रन्थेषु तु वक्रोक्ते-राधारभूतानि निखिलानि तत्त्वानि प्राप्यन्ते। एवं विधेषु अनेकेषु प्रेरणास्रोतस्सु समवगाहमानः कुन्तकः विचित्राभिधां वक्रोक्तिं काव्यजीवितं मन्यमानः एकं नूतनामार्गं प्रदर्शयामास।

पूर्वप्रकरणेषु यथैतन्निर्दिष्टं यत् काव्ये रसध्वन्यात्मवादे संस्थापिते, मनीषिवर्यैर्ध्वन्यात्मतत्त्वे वस्तुतो ज्ञाते सति पूर्वाचार्याणामलङ्कारगुणरीति वादाः काव्यात्मस्थानात् प्रच्युताः रसध्वनिसमुत्कर्षकाः सन्त एव गुणरीत्यलङ्कारा अङ्गिनं विहाय अङ्गाश्रिता अभूवन्। परकालिकानामपि वक्रोक्त्यौचित्यादिजीवितवादास्तत्प्रतिष्ठापकानामाचार्याणामेव काले प्रकाशिता विकसिता निराकृताश्चाभवन्। यथाहि आत्मनि तत्त्वतो ज्ञाते शरीरेन्द्रियप्राणादयः सर्वे तुच्छा भवन्ति, तथैव काव्ये रसध्वनौ आत्मनि ज्ञाते सर्वेऽपि अलङ्काररीतिवक्रोक्त्यौचित्यादयो ध्वन्यात्मन उपकारका-अजायन्त ।

अतः कुन्तकेन वक्रोक्तेः काव्यजीवितया तथा प्रतिपादने कृतेऽपि झटित्येव मम्मटेन–

यदुक्तमन्यथा वाक्यमन्यथान्येन योज्यते।
श्लेषेण काक्वावाज्ञेया सा वक्रोक्तिस्तथा द्विधा।[2]

इति श्लेषकाकुभेदेन द्विविधाया वक्रोक्तेः

---

१. अमरुशतके २३।
२. काव्यप्रकाशे ९८।

साधारणालङ्कारकोटौ अध:पात: कृत:। तत: परञ्च हेमचन्द्रनरेन्द्रप्रभ सूरिजयदेवविद्याधरविद्यानाथवाग्भटविश्वनाथकेशवमिश्राच्युतरायप्रभृतय[1] आचार्यास्तथैव शब्दालङ्काररूपतया वक्रोक्तिं प्रतिपादयाञ्चक्रु:। न कोऽपि प्राय: परकालीन: कुन्तकपदानुगामी समभवत्।

आचार्यकुन्तकस्य वक्रोक्तेस्तावतो गुणदोषविचारणात् पूर्वमिदं कथनं नासमीचीनं यत् पाश्चात्त्यकाव्यशास्त्रमर्मज्ञा: वक्रोक्तेर्मूलतत्त्वं सम्मानयन्ति काव्ये च तद्विधानं नूनं प्रतिपादयन्ति।

अरस्तूमहोदय: **कथनस्य प्रचलितसामान्यप्रकाराद् विलक्षणम् अन्य सर्वप्रकारं वैचित्र्यमभिप्रेतं भवती**[2]ति निर्दिशन् नूनमेव वक्रोक्तिमूलतत्त्वं प्रत्यपादयत्।

**लौञ्जाइनस** महोदय: **ऑन दि सबलाइम** नामके स्वीये आलोचनात्मकग्रन्थे प्रकारान्तरेण वक्रोक्तिं संसूचयन् प्रतिपादयामास यत् काव्ये सार: भव्यताइति। भव्यतयैव काव्ये अपूर्व- चमत्कार:। भव्यताया अभावे हि काव्यं नीरसम्। परन्तु एषा भव्यता काव्ये तदैवायाति यदा कवे: प्रतिपादनं वस्तु विधानं वा साधारणात् विलक्षणं भवति अस्या भव्यताया: अधोलिखितानि पञ्च मूलकारणानि तत्र स प्रत्यपादयत् **उदात्तविचारग्रहणम्, भव्यभावाभिव्यक्ति:, अलङ्कार:, रीति:, भव्यनिर्माणञ्च**। एतानि सर्वाणि वक्रोक्तेरपि सन्ति मूलतत्त्वानि।

**क्रोचे** महोदयस्य अभिव्यञ्जनायां कुन्तकस्य वक्रोक्तौ च साम्यं पश्यन्ति सूरय:।

इदन्त्विहावधेयम्–

रसालङ्काररीतिध्वनिसिद्धान्तान् जानान: कुन्तकाचार्य:

**उभावेतावलङ्कार्यौ तयो: पुनरलङ्कृति:।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते॥**[3]

---

१. द्र० काव्यात्ममीमांसा पृ० २३६-२३९।
२. द्र० अरस्तू का काव्यशास्त्र
३. वक्रोक्तिजीविते १, १०।

इत्येवं प्रतिपादयन् अलङ्कार्ययोः शब्दार्थयोः काव्यस्वरूपयोः वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तिः अलङ्कृतिर्भवतीति साधारणतया कथयन्नपि

वस्तुगत्या–

अलङ्कृतिरलङ्कार्यमपोद्धृत्य विवेच्यते।
तदुपायतया तत्त्वं सालङ्कारस्य काव्यता।।[1]

इति तत्त्वतः सालङ्कारस्यैव अलङ्करणसहितस्य सकलस्य निरस्तावयवस्य सतः काव्यस्य कविकर्मत्वं, तेन अलङ्कृतस्य काव्यत्वमिति स्थितिः, न पुनः काव्यस्यालङ्कारयोग इति[2] इत्येवं स्वयं व्याचक्षाणः शब्दार्थयोर्वक्रोक्तिः अलङ्कृतिः विच्छित्तिः शोभा, चारुतारूपा भवतीति सूचयति **सालङ्कारस्य काव्यता इत्यनेन अलङ्कृतौ एव शब्दार्थौ काव्यं न तु काव्ये अलङ्कारयोगः इति कथनेन अलङ्काराणां पृथग् विवेचनं वर्ण-** पदन्यायेन[3] काल्पनिकमेव न तु वास्तवम्। अलङ्कार्यालङ्कारयोर्भेदो न वास्तवः। एवमेव भामहाद्यभिमतस्य रसवदाद्यलङ्कारस्य खण्डनात्[4] वक्रोक्तिसिद्धान्तः अलङ्कारसिद्धान्तस्य वस्तुतः समर्थको नास्ति।

आनन्दवर्धनाचार्यस्य ध्वनिसिद्धान्तं खण्डयितुं प्रवृत्तेन कुन्तकेन काव्यस्य सूक्ष्मतमावयववर्णादारभ्य प्रबन्धं यावत् सर्वत्र चमत्कारसम्पादिकानां वर्णपदपूर्वार्द्धपदपरार्द्धवाक्यप्रकरणप्रबन्धवक्रतानां निरूपणम्

---

१. तत्रैव १, ६।
२. तत्रैव १, ६, का० वृत्तौ।
३. पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न हि।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन।।
वैयाकरणभूषणसारे ६६। द्र०
उपायाः शिक्ष्यमाणानाम् इत्यादि वाक्यपदीये।
४. अलङ्कारो न रसवत् परस्याप्रतिपादनात्।
स्वरुपादतिरिक्तस्य शब्दार्थासंगतेरपि।।

आनन्दवर्धनाचार्यस्य ध्वनिनिरुपणानुसारेणैव विदधानेन वर्णवक्रतायां शब्दालङ्कारस्य, वाक्यवक्रतायाम् अर्थालङ्कारसय, विशिष्ट-पदरचनात्मिकाया वामनरीतेः चतसृषु वर्णादिवक्रतासु अन्तर्भावं विधाय वक्रोक्तिः काव्यजीवितमिति सिद्धान्तितम्। किन्तु तावतो विचारपरेण अन्तःकरणेन-

चतुर्वर्गफलास्वादमप्यतिक्रम्य तद्विदाम्।
काव्यामृतरसेनान्तश्चमत्कारो वितन्यते।।[1]
रसादिपरमार्थज्ञमनस्संवादसुन्दरः।[2]
निरन्तररसोद्‌गारगर्भसन्दर्भनिर्भराः।
गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः।।[3]

इत्यादि समुद्‌गिरता रसस्य वस्तुतो महत्त्वं प्रकटयाञ्चक्रे। इत्थं रसस्याह्लादकारित्वे, औचित्यस्यावश्यकत्वे,ध्वनेरादर्शरूपत्वे स्वीकृतेऽपि कुन्तकेन-

वैदग्ध्यभङ्गीभणितिरूपायां वक्रौक्तौ निखिलानि रसगुणालङ्कार-रीत्यादीनि वस्तूनि अन्तर्भावयता वक्रोक्तिः काव्यजीवित मिति यत् प्रतिष्ठापितं तत्र तस्य मते रसादिवस्तूनि वक्रोक्तेरावश्यकानि अङ्गानि भवन्त्यपि अनिवार्याणि न सन्ति। एतेषामभावेऽपि वक्रोक्तिः काव्यसृष्टिं करोति। किन्तु वक्रोक्तिविरहितं काव्यं साधारणवार्तेव वस्तुकथनमात्रं सत् न काव्यमिति वक्रोक्तिजीवितस्य तात्पर्यम्।

इदमत्र विचारणीयम्-

विचित्राभिधारूपाया वक्रोक्तेरङ्गीकरणात् कुन्तकः अभिधावादी, व्यञ्जनायाश्च निराकरणात् ध्वनीविरोधीति प्रोच्यते। व्यञ्जनया अभिव्यज्यमानस्य रसादिध्वनेः अभिधया विचित्राभिधया कथमवगतिः

---

१. तत्रैव १, ५।
२. तत्रैव १, २६।
३. तत्रैव ४, ११।

स्यादित्यत्र कुन्तको मौनमालम्बते। रसादिरूपं परमार्थं स्वीकुर्वन्नपि तस्यानुभूतेरुपायं न दर्शयते।

नाममात्रेण ध्वनितत्त्वस्य विपश्चिद्भिःसहृदयैरनुभूतस्य खण्डनं भवितुं नार्हति। अत एवं मम्मटाचार्यः वक्रोक्तेः शब्दालङ्कारत्वमेव मन्यमानः अस्यास्तुच्छत्वं प्रदर्शयन् ध्वनेस्तन्महत्त्वं प्रतिष्ठापयामास।

वस्तुतः वक्रोक्तिरूपो विचित्रकथनप्रकारः कथनप्रकार एव। कवि-व्यापाररूपकथनप्रकारः मुख्यतया काव्यशरीरभूतशब्दार्थाभ्यामेव सम्बद्धो न तु काव्यात्मना। विचित्राभिधातो भिन्नेन व्यञ्जनरूपेण विचित्राभिधाव्यापारेण प्रकाशिताया वक्रताया विभिन्नभेदप्रभेदेषु वस्तुत स्तेदेव ध्वनितत्त्वं प्रकाशते। अतस्तादृशवक्रतायां वस्तुगत्या किमपि ध्वनेः वैलक्षण्यं न वर्तते। इदमेव कारणं येन वक्रोक्तेस्तुच्छत्वं ध्वनेर्महत्त्वञ्च मम्मटेन व्यवस्थापितम्।

अतश्च विचित्राभिधारूपेयं वक्रोक्तिः रसादिपरमार्थस्य सिद्धौ साधन-रूपमेव न तु स्वयं साध्यरूपा। यतः स्वयं कुन्तकेनापिं–

**निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।**
**गिरः कवीनां जीवन्ति न कथामात्रमाश्रिताः।।**

इति मुक्तकण्ठं स्वीकुर्वाणेन रसादेः साध्यत्वेन तत् साधनतयैव वक्रोक्तेर्महत्त्वं स्वीकृतम्।

---

# औचित्यविच्छित्तिमीमांसा

उचितं प्राहुराचार्याः सदृशं खलु यस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते॥१।

औचित्यमेकमेकत्र गुणानां राशिरेकतः।
विषायते गुणग्राम औचित्यपरिवर्जितः॥२॥

औचित्यं श्लाघ्यते तत्र कविताजीवितोपमम्।
कवयस्तदजानन्तः कथं स्युः कीर्तिभाजनम् ॥३॥

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
औचित्योपनिबन्धस्तु रसस्योपनिषत्परा ॥४॥

औचित्यविहितं कार्यं यथा लोके प्रशस्यते।
अनौचित्येन विहितं हास्यायैव प्रजायते ॥५॥

तथौचित्येन रचितं काव्यं मोदाय कल्पते।
अनौचित्येन विहितं वैरस्यायैव जायते॥६॥

रसे गुणेऽथालङ्कारे रीतौ वृत्तौ च सर्वतः।
औचित्यं काम्यते काव्ये विच्छित्तेरुपलब्धये॥७॥

पदे पदार्थे वाक्ये तु वाक्यार्थेऽथ प्रबन्धके।
चमत्काराय संयोज्यमौचित्यं व्यापि जीवितम् ॥८॥

विच्छित्तेर्बीजतां धत्ते यस्मादौचित्यमेकलम्।
तस्माद् विराजते तस्य महत्त्वं काव्यवर्त्मनि॥९॥

पृथगेतत्तु प्रस्थानं यद् यथा काव्यशासने।
संसाधयति तस्यात्र तदौचित्यं समीक्ष्यते॥१०॥

यत् किमपि वस्तु वर्णनं वा यस्य अनुकूलं भवति तत् प्रोच्यते उचितम्, उचितस्य च भावो यः तदौचित्यं निगद्यते। यथा हि लोके सर्वमपि व्यवहारजातं प्रकृतविषयानुकूलं सत् औचित्येन विहितं शोभते, गुणत्वमाश्रयते प्रशस्यते च, अनौचित्येन विहितं सत् दोषायते, निर्गुणायते, निन्द्यते च, तथैव काव्येऽपि रसगुणालङ्कारादय औचित्येन, वर्ण्यविषयानुकूल्येन विहिता विशिष्टां विच्छित्तिं जनयन्ति, कमपि प्रमोदमावहन्ति, प्राशस्त्यञ्च प्राप्नुवन्ति। त एव रसादयः प्रातिकूल्येन, अनौचित्येन वर्णिता रसभङ्गं जनयन्ति, कवेः कुकवित्वविडम्बनां विशदयन्ति, उपहास्यताञ्चावहन्ति। रसराजोऽपि शृङ्गारः कुमार-संभवे अनौचित्यमालम्बमानः पार्वतीपरमेश्वरालम्बनकः वैरस्यमावहति। स एव शृङ्गारः रघुवंशे महाराजमजं दिदृक्षूणां समुत्सुकानां पुरन्ध्रीणा-मालम्बनविभावतया औचित्येन समभिव्यक्तः कामपि विच्छिन्तिमनुभावयति। अत एव एवमुच्यते

अनौचित्यादृते नान्यद् रसभङ्गस्य कारणम्।
औचित्येन निबन्धस्तु रसस्योपनिषत्परा[1]॥

औचित्यमेक मेकत्र गुणानां राशिरेकतः।
विषायते गुणग्राम औचित्य-परिवर्जितः॥[2]''

अमुमेव सिद्धान्तमनुसरता आचार्यक्षेमेन्द्रेण औचित्यमेव काव्ये विच्छित्तिजनकं मन्वानेन–

''औचित्यं रस सिद्धस्य स्थिरं काव्यस्य जीवित''[3] मिति एद्धान्तितम् तथा औचित्यस्य व्यावहारिक जगतीवकाव्यजगत्यपि सर्वत्र विधानेनैव कविः अभीप्सितं फलं लभते। इत्युद्धोवितम्। यदि नाम काव्ये

१. ध्वन्यालोके ३, १४ कारिकायाम्।
२. धर्मबिन्दु टीकायां मुनिचन्द्रः पृ० १९।
३. औचित्य विचार चर्चायाम् ४, ५।

तस्य जीवितभूतमौचित्यं नास्ति तर्हि औचित्य-विरहितानांगुणालङ्काराणां विधानंष्प्रयोजनम्। नियतोहि परस्परोपकारक रुचिर-शब्दार्थ रूपस्य काव्यस्य उपमोत्प्रेक्षादयोऽलंकारास्तु करक-कुण्डलादिवत् बाह्य-शोभा-हेतवोऽलंकाराएव। येऽपिच माधुर्यादयोगुणास्तेऽपि श्रुत-सत्य-शीलादिवत् गुणाएव। औचित्यमेव केवलम काव्यस्य स्थिरमविनश्वरं जीवितम्, येन विना गुणालंकारयुक्तस्यापि काव्यस्य निर्जीवितत्वम्। यथाच पारदरसस्य समुचित सेवनेन शरीरे अविनश्वरं नव जीवनं स्फुरति, तथैव शृङ्गारादिरसेन सिद्धस्य काव्यस्य चारुत्व-सम्पादकेन औचित्येनैव स्थिरं जीवनं भवति। अतस्तेनोच्यते–

''काव्यस्यालमलंकारैः किं मिथ्या जनितैगुणैः।
यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते॥
अलंकारास्त्वलंकारा गुणा एव गुणाः सदा।
औचित्यं रस-सिद्धस्य स्थिरं काव्यस्य जीवितम्॥[१]'' इति।

हारादयो लौकिकालंकारा अपि तदैव शोभामादघति यदा ते उचित स्थानेषु समुचित रूपेण विन्यस्ता भवन्ति। शौर्यादयो लोकिका गुणा अपि एवमेव समुचित पात्रेषु औचित्येन प्रयुक्ता गुणत्व मासादयन्ति, अनौचित्येन प्रदर्शितास्ते गुणालंकारा न केवलं स्वगुणालंकारत्वं जहति, अपितु उपहासास्पदतां दधति। अतएव–तेनोद्धोयितम्–

उचितस्थानविन्यासादलङ्कृतिरलङ्कृतिः।
औचित्यादच्युता नित्यं भवन्त्येव गुणा गुणाः॥

कण्ठे मेखलया, नितम्बफलके तारेण हारेण वा,
पाणौ नूपुरबन्धनेन, चरणे केयूरपाशेन वा।
शौर्येण प्रणते, रिपौ करुणया, नायान्ति के हास्यताम्,
औचित्येन विना रुचिं प्रतनुते नालङ्कृतिर्नो गुणाः॥ इति

कण्ठे मेखलायाः, नितम्बे हारस्य, पाँणौ नूपुरस्य, चरणे केयूरस्य च

---

१. तत्रैव।

विन्यासेन मेखलादयोऽलङ्कारा न केवलं स्वीयमलङ्कारत्वं जहति, अपि तु तस्या ललनाया अपि मूढतां प्रदर्शयन्तः तामुपहसन्ति। एवमेव शरणागते प्रपन्ने शौर्यस्य, शत्रौ कारुण्यस्य च प्रदर्शनं न केवलं तं शौर्यादिगुणं दोषास्पदं करोति, अपि तु तं शूरं, कृपालुञ्च हास्यास्पदं विदधाति। एवञ्च यथा उचितस्थानेषु औचित्येन विन्यासाद् गुणालङ्काराणां महत्त्वं, तथैव काव्येऽपि औचित्येनैव रसरीतिगुणालङ्काराणां प्रयोगात् तेषां रसत्वादीनि भवन्ति। तदैव च काव्ये काव्यत्वम्। अतः औचित्यमेव काव्यस्य जीवितं परमं तत्त्वम्।

इदञ्च औचित्यं काव्यस्य प्रत्येकमङ्गे समपेक्षितम्। यत्रैव तस्याभावः स्यात् तत्रैव रसभङ्गो भवेत्। अतः काव्यस्य पदे, वाक्ये, प्रकरणे, प्रबन्धार्थे, गुणे , अलङ्कारे, रसे, क्रियायां, कारके, लिङ्गे, वचने, विशेषणे, उपसर्गे, निपाते, काले, देशे, कुले, व्रते, तत्त्वे, अभिप्राये, स्वभावे, सारसंग्रहे, प्रतिभायाम्, अवस्थायां, विचारे, नाम्नि, आशीर्वादे इति सप्तविंशतौ अङ्गेषु विशेषतः सुकविना औचित्यं प्रदर्शनीयम्[१]।

क्षेमेन्द्रेण एतत् प्रसङ्गे **सुवृत्ततिलके** पूर्वं विवेचितस्य वृत्तौचित्यस्य चर्चा औचित्यविचारचर्यायां न कृता। एवमेव अपेक्षितस्यापि रीत्यौचित्यस्य, वृत्त्यौचित्यस्य च आनन्दकुन्तकादिभिः सुचर्चितस्यात्र समुल्लेखो न विहितः।

निष्कर्षतः क्षेमेन्द्रस्य काव्यजीवितरूपमिदमौचित्यं प्रत्येकं काव्याङ्ग सुजीवयत् काव्यात्मानमाह्लदनीयं विदधाति।

पदौचित्यं विश्लेषयन् क्षेमेन्द्रो निर्दिशति यत् विरहविधुराया नायिकायाः कृते यदि कश्चित् कविः सुन्दरीप्रमदा, विभूषणाङ्गीत्यादि-पदानि प्रयुङ्क्ते तर्हि तस्यायं पदप्रयोगः अनौचित्यावहो भवेत्। तदर्थन्तु तन्वी, कृशाङ्गीत्यादीनि पदान्येव समुचितानि भवन्ति। यथा कविकुलगुरोः

१. काव्यस्याङ्गेपु च प्राहुरौचित्यं व्यापि जीवितम् ।। तत्रैव ८-१०।

कालिदासस्य **तन्वी श्यामा शिखरिदशना इति** मेघदूतपद्ये **तन्वीति** प्रयोगः विरहिण्या यक्षप्रियतमायाः कृते वर्तते। एवमेव वाक्य-प्रकरणादीनामौचित्यविधानोदाहरणानि तत्रावलोकनीयानि।

आचार्यक्षेमेन्द्रस्य काव्यात्मभूतोऽयं विशालः औचित्यविचार-पारिजातः भरतमुनेः नाट्यशास्त्ररत्नाकरात् प्रादुर्बभूव, यत्र नाट्ये लोकस्वभावस्य, लोकव्यवहारप्रयोगौचित्यस्य च प्रामुख्यं भवतीति प्रतिपाद्यते।

**लोकसिद्धं भवेत् सिद्धं नाट्यं लोकस्वभावजम्।**
**तस्मान्नाट्यप्रयोगे तु प्रमाणं लोक इष्यते।।**[१]

**वयोऽनुरूपः प्रथमस्तु वेषो, वेषानुरूपस्तु गतिप्रचारः।**
**गतिप्रचारानुगतं च पाठ्यं, पाठ्यानुरूपोऽभिनयश्चकार्यः।।**[२]

**अदेशजो हि वेषस्तु न शोभां जनयिष्यति।**
**मेखलोरसि बन्धे च हस्यायैवोपजायते।।**[३]

एतस्योपजीव्यत्वं स्पष्टं क्षेमेन्द्रस्य **कण्ठे मेखलयेत्यादि** पूर्वोक्तपद्ये परिदृश्यते।

महर्षिशौनकः बृहद्देवतायां मन्त्रार्थविवेचनप्रसङ्गे अर्थात्, प्रकरणादिव औचित्यादर्थविवेचनं कार्यमिति समुल्लिखन् औचित्यतत्त्वं निर्दिशति—

**अर्थात् प्रकरणाल्लिङ्गादौचित्याद् देशकालतः।**
**मन्त्रेष्वर्थविवेकः स्यादितरेष्विति च स्थितिः।।**[४]

एवमेव भर्तृहरिः वाक्यपदीये शब्दार्थविचारप्रसङ्ग

---

१. नाट्यशास्त्रे २६, ११३
२. तत्रैव १४, ६८।
३. तत्रैव २३, ६९।
४. बृहद्देवतायाम् २. १२०।

**वाक्यात् प्रकरणादर्थादौचित्याद्देशकालतः।**
**शब्दार्थाः प्रविभज्यन्ते न रूपादेव केवलात्।।** इति

प्रतिपादयति तत्र काव्यौचित्यस्य मूलमुपलभ्यते।।

भामह[1]दण्डि[2]रुद्रटादीनां[3] विचारधारया विकसितोऽयमौचित्य-पारिजातः आनन्दवर्धेनेन परिवर्धितः सन् पल्लवितः पुष्पितश्चाभवत्।

औचित्येनैव निरूपितो रसः परमानन्दाय कल्पते। **अनौचित्येन निबद्धस्तु वैरस्यायैव जायते।**[4] इममेव औचित्यमूलमन्त्रमाधारीकृत्य आनन्दवर्धनः रीतिवृत्त्यलङ्कारदीनामौचित्येन रसानुकूलं विधानं न्यरूपयत्। प्रबन्धौचित्यं पल्ल्वयन् स निरदिशत्–

१. काव्ये नाट्ये वा विभावविभावानुभावसंञ्चारिभावानाम् औचित्येन विधानात् कथाशरीरं यथा सुन्दरं स्यात् तथा निर्मेयम्।

२. इतिवृत्तं भवतु नाम रामायणादिप्रसिद्धं कविकल्पनाप्रसूतं वा विभावादीनां रसानुकूलेन औचित्यपूर्णेन विधानेन तत् अभीष्टरसमभिव्यक्तुं क्षमते।

---

१. सन्निवेशविशेषात्तु दुरुक्तमपि शोभते।
नीलं पलाशमाबद्धमन्तराले स्रजामिव।।
किञ्चिदाश्रयसौन्दर्याद् धत्ते शोभामसाध्वपि।
कान्ताविलोचनं न्यस्तं मलीमसमिवाञ्जनम्।।
भामहालङ्कारे १, ५४-५५।

२. समुदायार्थशून्यं यत् तदपार्थमितीष्यते।
उन्मत्तमत्तबालानामुक्तेरन्यत्र दुष्यति।।
इदमस्वस्थचित्तानामभिधानमनिन्दितम्।
इतरत्र कविः को वा प्रयुञ्जीतैवमादिकम्।।
काव्यादर्शे ३, १२९-३०।

३. अर्थविशेषवशाद् वा सभ्येऽपि तथा क्वचिद् विभक्तेर्वा।
अनुचितभावं मुञ्चति तथा विधं तत्पदं सदपि।।
वक्ता हर्षभयादिभिराक्षिप्तमनास्तथा स्तुवन् निन्दन्।
यत् पदमसकृद् ब्रूयात् तत्पुनरुक्तं न दोषाय।। रुद्रटालङ्कारे ६. २३. २९।

४. अनौचित्यादृते नान्यत् इत्यादि ध्वन्या०।

३. सन्धिसन्ध्यङ्गादिसङ्घटनं रसाभिव्यक्तिमभिलक्ष्य समुचितं कार्यं न तु केवलनाट्यशास्त्रादिनिर्देशपालनानुरोधेन।

४. अङ्गिरसम् औचित्यपरिपालनाय अङ्गरसे नैव गौणं विदध्यात्।

५. रसभावादीनामुद्दीपनप्रशमनयोरौचित्यमेव निकषं मन्येत।

६. अलङ्कारविधानसामर्थ्ये सत्यपि रसानुकूलतयैव तस्य समुचितं विधानं कुर्यात्[1] एवञ्च रसाभिव्यक्त्यनुकूलमेव काव्ये समुचितं विधानमभीष्टफलाय कल्पते इति निर्गलितं तस्य तात्पर्यम्।

कवीनां मङ्गलं कामयमानो जयमङ्गलाचार्योप्येवमेव कवीन् **कवि-शिक्षायां** शिक्षयति–

**औचित्यं श्लाघ्यते तत्र कविताजीवितोपमम्।**
**कवयस्तदजानन्तः कथं स्युः कीर्तिभाजनम्।।** इति।

एतत् सर्वं सङ्कलयन् यशोवर्मा रामाभ्युदयनाटके प्रतिपादयामास–

---

१. विभावभावानुभावसञ्चार्यौचित्यचारुणः।
विधिः कथाशरीरस्य वृत्तस्योत्प्रेक्षितस्य च।।

इतिवृत्तवशायातां त्यक्त्वाननुगुणां स्थितिम्।
उत्प्रक्ष्योऽप्यन्तराभीष्टरसोचितकथोन्नयः।।

सन्धिसन्ध्यङ्गघटनं रसाभिव्यक्त्यपेक्षया।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया।।

उद्दीपनप्रशमने यथावसरमन्तरा।
रसस्यारब्धविश्रान्तेरनुसन्धानमङ्गिनः।।

अलङ्कृतीनां शक्तावप्यानुरूप्येण योजनम्।
प्रबन्धस्य रसादीनां व्यञ्जकत्वे निबन्धनम्।।

ध्वन्यालोके ३, १०-१४।

**आचित्यं वचसां प्रकृत्यनुगुणं सर्वत्र पात्रोचिता**
**पुष्टिः स्वावसरे रसस्य च, कथामार्गे न चातिक्रमः।**
**शुद्धिः प्रस्तुतसंविधानकविधौ, प्रौढिश्च शब्दार्थयोः,**
**विद्वद्भिः परिभाष्यतामवहितैरेतावदेवास्तु नः।**[१] इति

काव्ये औचित्यं कथं प्रजायते तस्योपायं प्रदर्श्य अग्निपुराणं प्रतिपादयति—

**यथावस्तु तथा रीतिर्यथा वृत्तिस्तथा रसः।**
**ऊर्जस्विमृदुसन्दर्भादौचित्यमुपजायते॥**[२] इति

राजशेखरेण तु काव्यमीमांसायाम् **उचितानुचितविवेको व्युत्पत्तिः। रसोचितशब्दार्थसूक्तिनिबन्धनः पाकः** इति संक्षिप्तनिर्देशेन काव्ये औचित्यस्य महत्त्वमङ्गीचक्रे।

वक्रोक्तिजीवितकारेणकुन्तकेन विविधानां कविव्यापरवक्रत्वप्रकाराणां निरूपणप्रसङ्गे मुक्तकण्ठं, काव्ये औचित्यस्य महत्त्वं, विच्छित्तिजनकत्वञ्च प्रदर्शयाञ्चक्रे। तत्र काव्यस्य वर्णपदवाक्यादिविभिन्नेषु यदौचित्यमपेक्षितं तदेव पदादीनां वक्रत्वम् इति तस्य प्रतिपादितदिशा विज्ञायते। यथा **तत्र पदस्य तावदौचित्यं बहुविधभेदभिन्नो वक्रभाव**[३]**:** इत्यादिकथनेषु औचित्यं वक्रत्वञ्चेत्युभयमेकरूपमेवेति अवगम्यते।

भोजराजस्य सरस्वतीकण्ठाभरणे, शृङ्गारप्रकाशे च, धनञ्जयस्य दशरूपके, मम्मटस्य काव्यप्रकाशे[४] च **औचित्योपनिबन्धस्तु रसस्योपनिषत्परेति** आनन्दवर्धनाचार्यस्यैव पदध्वनिः श्रूयते। एतेन समेषामाचार्याणां मते काव्ये औचित्यं सर्वथा काम्यं तथा तद्विधानं परमावश्यकमिति निश्चीयते।

---

१. तत्रैव ३, १४ कारिकायाम्।
अग्निपुराणे
२. ३४५, ५।
३. वक्रोक्तिजीविते १, ५० का वृत्तौ। तथा
आञ्जस्येन स्वभावस्य महत्त्वं येन पोष्यते।
प्रकारेण तदौचित्यमुचिताख्यानजीवितम्॥
४. द्र० काव्यात्ममीमांसा पृ० २६९-२८२।

पूर्ववर्तिनामाचार्याणामौचित्यविषयकमतानि आचार्यक्षेमेन्द्रस्य समक्षं प्रत्यक्षायमाणानि आसन्। तानि समवलोक्य, समीक्ष्य, अनुसन्धाय च क्षेमेन्द्रः स्वकीये ग्रन्थे औचित्यविचारचर्चामकरोत्। तत्र काव्ये औचित्यस्य किं कार्यम्, किं स्थानम्, किञ्च प्रयोजनमित्येतद्विषये अभिनवगुप्त-पादाचार्यस्य यत् सुस्पष्टं मतं विद्यते तदपि आचार्यक्षेमेन्द्रेण अवलोकितानि भवेयुरित्यनुमीयते यथा हि-आलोकावलोकनाय लोचनमपेक्षितं भवति, तथैव ध्वन्यालोके आनन्दवर्धनेन प्रतिपादितं मतं समवलोकयितुं लोचनोन्मीलनं विदधता अभिनवगुप्तपादेन औचित्यस्य कार्यं प्रयोजनञ्च सम्यङ् निरूपितम्–

**यथा हि लोके शरीरसमवायिभिः कटककेयूरादिभिरलङ्कारैः चेतन आत्मा एव अलङ्क्रियते। यतो हि अचेतनं शवशरीरं कटक-कुण्डलाद्युपेतमपि न भाति, अलङ्कार्यस्याभावात्। यतिशरीरं कटकादियुक्तं हास्यावहं भवति, अलङ्कार्यस्य अनौचित्यात्, नहि देहे किमपि अनौचित्यमस्ति, तथैव काव्येऽपि वस्तुतो ध्वनिः काव्यस्यात्मा एव अलङ्कार्यः[१] अतः उचितशब्देन रसविषयमौचित्यं भवतीति दर्शयन् रसध्वनेर्जीवितत्वं सूचयति तदभावे हि किमपेक्षया इदमौचित्यं नाम सर्वत्रोद्घोष्यते इति भावः।[२]**

एतल्लोचनावलोकनेन काव्ये औचित्यस्य कार्यं प्रयोजनञ्च विस्पष्टं भवति।

औचित्यस्य संक्षिप्तेन उपर्युक्तकाव्यशास्त्रीयविवेचनेन इदमवगम्यते यत् ध्वनिपूर्वकाले अनौचित्यपरिहारमुखेनैव औचित्यस्य विचारोऽभवत् न तु विधिमुखेन। आनन्दवर्धनाभिनवगुप्तादिध्वनिवादिनामौचित्यतत्त्वं काव्यव्यापकं महत्त्वपूर्णं सदपि काव्यात्मभूतस्य रसध्वनेरङ्गतया, साधनीभूततयैव सुचर्चितमभूत्। वक्रोक्तिवादिनः औचित्यं काव्यस्य सर्वाङ्गेषु समपेक्षितमपि वक्रत्वरूपमेव प्रतिभाति।

---

१. ध्वन्यालोके २, ६ का० लोचनम्।

२. तत्रैव काव्यमालासंस्करणे पृ० १६
द्र० तत्रैव पृ० २६०।

औचित्यसम्प्रदायप्रवर्तकः आचार्यक्षेमेन्द्रः **औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्** इति सिद्धान्तयन् औचित्यमेव काव्ये सर्वातिशायितत्त्वमिति मनुते। अत एवास्य निम्नोक्तसमुद्घोषः काव्यशास्त्रे समुज्जृम्भते।

**औचित्यरचितं वाक्यं सततं सम्मतं सताम्।**
**त्यागोदग्रमिवैश्वर्यं शीलोज्ज्वलमिव श्रुतम्॥**

**उचितार्थविशेषेण प्रबन्धार्थः प्रकाश्यते।**
**गुणप्रमाणभव्येन विभवेनैव सज्जनः॥**

**प्रस्तुतार्थोचितः काव्ये भव्यः सौभाग्यवान् गुणः।**
**स्यन्दतीन्दुरिवानन्दं संभोगावसरोदितः॥**

**कुर्वन् सर्वाशये व्याप्तिमौचित्यरुचिरो रसः।**
**मधुमास इवाशोकं करोत्यङ्कुरितं मनः॥**[१]

एवं हि औचित्यं काव्यस्य आत्मरूपमुताहो काव्यात्मनो रसध्वनेः साधनीभूतमित्यस्य समीक्षणं विच्छित्तिमीमासाप्रसङ्गे यथास्थानं द्रष्टव्यम्।

---

१. औचित्यविचारचर्चायाम् १२, १३ १४, १६

# काव्यविच्छित्तिमीमांसा

काव्यविच्छित्तिमीमांसाप्रसङ्गे विच्छित्तेः स्वरूपं कार्यञ्च प्राथम्येन विवेचनीयं भवति।

१. तत्र विच्छित्तेः शोभा, चारुता, चमत्कृतिः, चमत्कारः, वैचित्र्यम्, सौन्दर्यमित्यादीनि समानार्थकतया अवबुध्यन्ते। **रसे सारश्चमत्कारः, अलङ्कारे प्राणश्चमत्कारः** इत्यादिव्यवहारात् विच्छित्तिरूपचमत्कारः आनन्दात्मकरसस्य सारतया, काव्यशोभातिशायकस्यालङ्कारस्य प्राणतया चावगम्यते। एतेन एतादृशचमत्कारप्रतीतये रसालङ्काराः काव्ये विधीयन्ते। अतो विच्छित्तिरूपश्चमत्कार एव काव्ये परं साध्यमिति सूच्यते।

(२) **अनुमानं तु विच्छित्त्या ज्ञानं साध्यस्य साधानात्।**[१] इत्यादौ विच्छित्तिः आहार्यारोपरूपा भङ्गी। **स्तोकाप्याकल्परचना विच्छित्तिः कान्ति पोषकृत्।**[२] इत्यादौ च अङ्गशोभायाः साधिका। एवमेव **रसिकः काव्यविच्छित्त्या लभते परमां मुदम्**

इत्यादौ विच्छित्तिः परममोदस्य साधनारूपा।

इत्थं च विच्छित्तिः साध्यरूपेण साधनरूपेण च काव्ये काव्यशास्त्रे च प्रयुज्यते इति निश्चीयते। एतेनैव पूर्वप्रतिपादितेषु रसादिसम्प्रदायेषु विच्छित्तिशब्दः साध्यसाधनरूपयोरुभयोरर्थयोः प्रयुज्यमानो दृश्यते।

---

१. साहित्यदर्पणे १०; ८२।

२. तत्रैव ३, ११६।

अग्रे च विच्छित्तिमीमांसायामस्या विच्छित्तेरुभयो रूपयोः प्रतिपादन-पुरस्सरं तत् साध्यं काम्यं रूपं प्रदर्शयिष्यते।

**( क ) अलङ्कारविच्छित्तिः**

वेदवेदाङ्गरामायणमहाभारतादौ प्रयुक्तः अलङ्कारशब्दः अलङ्क्रियते-ऽनेनेति करणसाधनान्तः कटककुण्डलाद्याभूषणरूपमर्थं प्रतिपादयति। तदनुसारं भरतमुनिरपि नाट्यशास्त्रे नाट्यं काव्यं वा अलङ्कर्तुं संशय-दृष्टान्तनिदर्शनगुणातिशयलेशार्थापत्तिप्रभृतिभिः लक्षणैः सह उपमारूप-कदीपकयमकरूपान् चतुरोऽलङ्कारान् निरूपयामास। तदारभ्य मेधाविशाख-वर्धनरामशर्मादयोऽपि स्वग्रन्थेषु यमकादिशब्दालङ्कारान् उपमाद्यर्थालङ्काराँश्च तथैव प्रतिपादयाञ्चक्रुः। एतस्मिन्नेवार्थे विद्यमानस्य भरतकालिकस्य चतुस्सदस्यात्मकपरिवारस्यालङ्कारास्य वंशः कालक्रमेण प्रवर्धमानः अप्पयदीक्षितस्य समये प्रायेण शतद्वयमितसदस्यात्मकविशालपरिवारः समभवत् यस्य चाविच्छिन्नपरम्परा न कदाप्यवरुद्धाभवत्।

किन्तु भामहाचार्यः

**किमिवहि मधुराणां मण्डनं नाकृतीनाम्**
**यदि भवति वचश्च्युतं गुणेभ्यो**
**वपुरिव यौवनबन्ध्यमङ्गनायाः।**
**अपि जनदयितानि दुर्भगत्वं**
**नियतमलङ्करणानि संश्रयन्ते॥**

इत्याद्युक्तिसूचितस्य लोके काव्ये च अलङ्कारापेक्षया अधिक-महत्त्वशालिनः साहजिकस्य गुणादिजन्यस्य वा सौन्दर्यस्य महत्त्वं तिरस्कुर्वन्—

**न कान्तमपि निर्भूषं विभाति वनिताननम्**

इति प्रतिपादयन् अलङ्कारमेव सर्वातिशायिनममन्यत। अलङ्कारविच्छित्त्यैव काव्ये काव्यत्वञ्च निरचिनुत। तत्र च

लोकातिक्रान्तगोचरं सर्वालङ्कारसामान्यम्[1] असाधारणं वक्रोक्त्यतिशयोक्तिरूपमेकं मौलिकमलङ्कारं काव्यजीवितस्वरूपं स्वीकुर्वन् एतेनैव काव्यत्वं, तदभावे काव्यं वार्तामात्रमिति मनुते तथा हि—

निमित्ततो वचो यत्तु लोकातिक्रान्तगोचरम्।
मन्यन्तेऽतिशयोक्तिं तामलाङ्कारतया यथा॥

सैषा सर्वत्र वक्रोक्तिरनयार्थो विभाव्यते।
यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥

हेतुश्च सूक्ष्मो लेशोऽथ नालङ्कारतया मतः।
समुदायाभिधानस्य वक्रोक्त्यनभिधानतः॥

गतोऽस्तमर्को भातीन्दुर्यान्ति वसाय पक्षिणः।
इत्येवमादि किं काव्यं वार्तामेनां प्रचक्षते॥[2] इति

यतो हि अनयैव अतिशयोक्तिरूपया वक्रोक्त्या अलङ्कारान्तरेषु जीवनाधानं भवति, अर्थस्य विभावनंरसमयीकरणं भवति, अत एषैव काव्यजीवितरुपा तथा अतिशयोक्तिरूपा तन्मूलकश्चालङ्कारो विच्छित्तिजनकतया काव्ये अङ्गी अत एव रसादिस्थले रसवदादयोऽलङ्कारा एव स्वीक्रियन्ते।

सामान्यरूपाया अतिशयोक्तेः महत्त्वं प्रकारान्तरेण आनन्दवर्धनाभिनवगुप्तादिभिरपि स्वीक्रियते इति विस्तरेण पूर्वम् अलङ्कारविच्छित्तिमीमांसाप्रसङ्गे प्रतिपादितत्वात् पुनर्नेह वितन्यते।

काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते।
ते चाद्यापि विकल्प्यन्ते कस्तान् कार्त्स्न्येन वक्ष्यति॥[3]

---

१. भामहोऽतिशयोक्तिं सर्वालङ्कारसामान्यरूपामवादीत्। लोचने
वक्रोक्तिः सकलालङ्कारसामान्यम्। वक्रोक्ति जी० १, ३१ क०।

२. भामहालङ्कारे २, ८५, ८६।

३. काव्यादर्शे० २, ९।

इत्येवम् अलङ्कारस्य काव्यशोभासम्पादकधर्मत्वं मन्यमानेन सन्धि-सन्ध्यङ्गादीनामपि अलङ्काररूपतयैव इष्टत्वं स्वीकुर्वाणेन, रसवत्प्रेय-स्वदाद्यलङ्कारान्तर्गतत्वेन रसभावादीनां प्रतिपादनेन च दण्डिना भामह-सिद्धान्तः समर्थयाञ्चक्रे तथा प्रसारयाञ्चक्रे।

**अलङ्कारान्तराणामप्येकमाहुः परायणम्।**
**वागीशमहितामुक्तिमिमामतिशयाह्वयाम्॥**[1]

इत्येवं प्रकारेण च वागीशमहिताया अतिशयोक्तेः उत्कृष्टमहिमा प्रकटयाम्बभूवे।

आचार्यवामनेन **काव्यं ग्राह्यमलङ्कारात् सौन्दर्यमलङ्कारः, अलङ्कृतिरलङ्कारः** इत्यादिरूपेण सौन्दर्यरूपालङ्कारेणैव काव्यस्य ग्राह्यत्वं भवतीति मन्वानेन, **काव्यशब्दोऽयं गुणालङ्कारसंस्कृत-योश्शब्दार्थयोः** वर्तते इत्येवं कथयता गुणालङ्कारसंयुक्तशब्दार्थयोरेव मुख्यतः काव्यत्वव्यवहार इति स्वीकुर्वाणेन अलङ्कारस्य महत्त्वमङ्गीचक्रे। यद्यपि **काव्यशोभायाः कर्तारो धर्मा गुणाः** इत्थं प्रतिपाद्य दण्डिनः अलङ्कारस्य काव्यशोभाकर्तृत्वं विखण्डयता, तदतिशयहेतवस्त्वलङ्काराः इत्यनेन ध्वनिप्रस्थानाचार्येण प्रतिपादयिष्यमाणस्य हारादिवदलङ्कारा-इत्यलङ्कार- स्वरूपस्य विद्यमानशोभातिशायकधर्मस्य बीजारोपणं कुर्वता वामनेन अलङ्कारस्य द्वितीयमपि रूपं प्रदर्शितं, तथापि दोषाणां हानेन गुणालङ्काराणाञ्च आदानेन जायमानस्य सौन्दर्यरूपालङ्कारस्य महत्त्वमलङ्कारसम्प्रदायानुसारं स्वी- कृतमेव।

उद्भटेन रसवदाद्यलङ्कारेषु समस्तरसप्रपञ्चस्य, आक्षेपसमा-सोक्त्याद्यलङ्कारेषु वस्तुरूपव्यङ्ग्यस्य, पर्यायोक्तालङ्कारे गम्यमानार्थस्य च अन्तर्भावं विधाय अलङ्कारस्य अङ्गित्वं प्रदर्शितम्। रुद्रटेन भावालङ्कारे प्रतीयमानमर्थं गृह्णता, काव्यालङ्कार इति स्वग्रन्थस्य अन्वर्थं नाम विदधता अलङ्कारस्य प्राधान्यं प्रकटयाञ्चक्रे।

---

१. काव्यादर्शे २, २२०।

अलङ्कारसम्प्रदायाचार्याणां पूर्वोक्तानि मतानि अनुसरन्नेव प्रथम-वाग्भटः

**दोषैर्मुक्तं गुणैर्युक्तमपि येनोज्झितं वचः।**
**स्त्रीरूपमिव नो भाति तं ब्रुवेऽलङ्क्रियोच्चयम्॥**

इति प्रतिपादयामास।

**इदमत्रावधेयम्**

भामहस्य अतिशयोक्तिरूपया वक्रोक्त्या अर्थस्य विभावनंरसमयीकरणं भवति। दण्डिनः शोभाकरधर्मरुपेण अलङ्कारेण काव्यसौन्दर्य-सम्पादनात् रसादयोऽपि रसवदाद्यलङ्काररुपतया अलङ्कारत्वं भजमाना अलङ्कार्यत्वं जहति। वस्त्वलङ्कारध्वनिरपि अलङ्कार्यत्वं विहाय अलङ्कारतां गृह्णाति। किन्तु अलङ्कारसम्प्रदायाचार्याणामेतत् प्रतिपादनेनैव रसादिध्वने-रलङ्कार्यता निराकृता न भवति। वस्तुतो मीमांसया रसादेरलङ्कार्यत्वम् अलङ्कारस्य च चारुत्वहेतुत्वं निश्चितं भवति। न हि आत्मा एवं आत्मन-श्चारुत्वहेतुर्भवतीति कथम् आत्मस्वरूपोऽलङ्कारः भामहादेरात्मस्वरूप-मलकारमलकरिष्यति? अतो रसादिध्वनेरलङ्कार्यत्वमर्थात् आत्मत्वं सर्वथा निर्बाधं भवति। अपरञ्च भामहस्य वक्रोक्तिः अर्थस्य रसमयीकरणे साधनतया स्वयं साध्यरूपा नास्ति। अतः अलङ्कारविच्छित्तिः काव्यस्य परमाराध्यविच्छित्तिरूपा न संभवति। काव्यशोभया अतिशयाधाने एव अलङ्कारविच्छित्तेर्महत्त्वेन रसध्वनिविच्छित्तिरेव काव्यसर्वस्वम् अत एवोच्यते–

**रसध्वनिर्न यत्रास्ति तत्र बन्ध्यं विभूषणम्।**
**जीवन्त्या मृगशावाक्ष्या हार एव विभूषणम्॥ इति**

**( ख ) रीतिविच्छित्तिः**

मार्गधारागत्याद्यर्थेषु प्रयुक्तात् ऋग्वेदीयरीतिशब्दात्, नाट्यशास्त्र-

विष्णुधर्मोत्तरपुराणादौ देशविशेषे वेशभूषाचाराद्यर्थानां प्रतिपादकात् प्रवृत्तिशब्दाच्च प्राप्तप्रेरणा आचार्याः काव्यशास्त्रे वैदर्भादिमार्गरीत्यादि-शब्दान् प्रयुञ्जतेस्म, यस्य स्पष्टप्रतिपादनं भोजराजः

**वैदर्भादिकृतः पन्थाः काव्ये मार्ग इति स्मृतः।**
**रीङ्गताविति धातोः सा व्युत्पत्त्या रीतिरुच्यते।।**[१]

इत्येवं प्रकारेण अकरोत्।

अस्या एवं रीतेः किमपि विशिष्टं स्वरूपं किमप्यपूर्वं कार्यं च प्रदर्शयन् आचार्यवामनः रीत्यात्मवादं संस्थापयन् नवीनमेकं रीतिप्रस्थानं प्रवर्तयामास। अस्य काव्यात्मरूपा गुणविशिष्टपदरचनास्वरूपा रीतिरेव काव्ये काव्यत्वं सृजति, विशिष्टां विच्छित्तिं च जनयति। यथा च रेखासु चित्रं प्रतिष्ठितं भवति, रेखाभावे चित्रस्यैवाभावस्तथैव रीतिषु विद्यमानासु काव्यं विद्यमान[२] भवति रीत्यभावे काव्यत्वस्यैव अभावो जायते।

एषा च रीतिः वामनाचार्यमते वैदर्भीगौडीपाञ्चालीति भेदेन त्रिविधा। तत्र श्लेषादिसंमस्तगुणोपेता वैदर्भी परमोत्तमा यतः वैदर्भ्यामेव अर्थगुणवैभवं वस्तुसौन्दर्यं वा आस्वाद्यं भवति तुच्छमपि वस्तु

---

१. एतासु तिसृषु रीतिषु रेखास्विव चित्रं काव्यं प्रतिष्ठितमिति
काव्यालङ्कारसूत्रवृत्तौ १, २, १३।

२. किन्त्वस्ति काचिदपरैव पदानुपूर्वी
यस्यां न किञ्चिदपि किञ्चिदिवावभाति।
आनन्दयत्यथ च कर्णपथं प्रयाता
चेतस्तममृतवृष्टिरिव प्रविष्टा।।
वचसि यमधिगम्य स्पन्दते वाचकश्री-
र्वितथमवितथत्वं यत्र वस्तु प्रयाति।
उदयति हि च तादृक् क्वापि वैदर्भरीतौ
सहृदयहृदयानां रञ्जकः कोऽपि पाकः।
–तत्रैव १, २, २२ प्रसङ्गे।

महत्त्वमादधाति अमृतवृष्टिरिव सहृदयहृदयं समाह्लादयति[1]

अयमाशय: - **अर्थस्य प्रौढिरोज:**[2] इत्योजो गुणेन अर्थसम्पत्ति:, **उक्तिवैचित्र्यं माधुर्यमिति** माधुर्यगुणेन उक्तेर्विच्छिति:, **अर्थदृष्टि: समाधि**[3]:, इति समाधिगुणेन नवीनार्थकल्पनचमत्कार:, **दीप्तरसत्वं कान्ति:**[4] इति कान्तिगुणेन रसप्रकर्ष: **अर्थवैमल्यं प्रसाद:**[5] इति प्रसाद-गुणेन च अर्थस्य वैशद्यम् इत्यादीनि सर्वाणि काव्ये विच्छित्तिजनकानि तत्त्वानि वैदर्भरीतावेव प्रकटितानि भवन्ति अत इयमेव रीति: काव्यस्य सर्वातिशायिमहत्त्वपूर्णमात्मतत्त्वम्।

वैदर्भमार्गस्य प्राणस्वरूपान् विशिष्टान् **दशगुणान्**[6] आधृत्य जायमानाया रीते: स्वरूपनिर्माणे गुणानामेव विशिष्टं बीजत्वमिति[7] फलति। अत्रेदं विवेचनीयं भवति यत् किं रीतिस्वरूपनिर्माणमेव गुणानां कार्यक्षेत्रम्, उताहो तदधिकं प्रकृष्टकार्यं रसभावादीनामभिव्यञ्जनमपि।

वस्तुस्थित्या विवेचनेन गुणस्य रसाभिव्यञ्जकतया तस्य रसेन सह नियतसम्बन्धो भवति। काव्यस्वरूपसंघटनारूपाया रीतेश्च वक्तृवाच्यौचित्येन रसविशेषेण सह सम्बद्धतया औचित्यं तत्र सम्बन्धविशेषनियामकं जायते। एतच्च आनन्दवर्धनेन स्पष्टं प्रतिपादितम्-

**गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन्, व्यनक्ति सा।**
**रसान्, तन्नियमे हेतुरौचित्यं वक्तृवाच्ययो:॥**[8] **इति**

---

१. तत्रैव ३, २, २१।
२. तत्रैव ३, २, ११।
३. तत्रैव ३, २, ७।
४. तत्रैव ३, २, १५।
५. तत्रैव ३, २, ३।
६. श्लेष: प्रसाद: समता माधुर्यं सुकुमारता।
अर्थव्यक्तिरुदारत्वमोज: कान्तिस्समाधय:॥
इति वैदर्भमार्गस्य प्राणा दश गुणा: स्मृता:॥
७. विशेषो गुणात्मा काव्यालं० १, २, ७-८।
८. ध्वन्यालोके ३, ६,।

एवञ्च गुणस्य परमार्थः रसाभिव्यञ्जकत्वेन रसास्वादसाधनतया गुणविशिष्टरचनात्मिकाया रीतेरपि रसोत्कर्षे साधनत्वेन वामनाचार्यस्य काव्यात्मरूपा रीतिः तद्रूपा तज्जन्या वा विच्छित्तिश्च न स्वयं सिद्धिरूपा, अपि तु रसादिसिद्धौ वस्तुतः साधनरूपैव।

**वक्रोक्तिविच्छित्तिः**

वाग्वैदग्ध्यवाक्छलक्रीडालापपरिहासजाल्पितचमत्कारपूर्णशैलीकुटिलोक्तीत्याद्यर्थेषु प्रयुक्ता वक्रोक्तिः भामहस्य वक्राभिधेयशब्दोक्तिरूपा अतिशयोक्त्यपराभिधाना असाधारणरूपतया वाचामलङ्कृतिरजायत। भामहादिना लोकातिक्रान्तगोचररूपया अनयैव वक्रोक्त्या अर्थस्य विभावनं रसमयीकरणं स्वीकृतम्। अतो वक्रोक्तिरियं काव्ये सर्वातिशायिनी समभवत्।

इमामेव वक्रोक्तिमुपजीव्य वक्रोक्तिजीवितकारःकुन्तकः

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभाणितिरुच्यते॥**[१] इति

प्रतिपादयन् शब्दार्थरूपयोरलङ्कार्ययोः वैदग्ध्यभङ्गीभणितिरूपां वक्रोक्तिं सकलम[२]लङ्कारसामान्यरूपतया एकां विशिष्टामलङ्कृतिममन्यत। इयं च वक्रोक्तिः शास्त्रलोकव्यवहारयोः प्रयुक्तशब्दार्थरचनातो विलक्षणा चमत्कारोत्पादकविचित्राभिधारूपा प्राक्तनाद्यतनसंस्कारपरिपाकप्रौढकविशक्तिरूपप्रतिभया जायमानेन कविकर्मकौशलेन समुत्पन्नविच्छित्तिजनककथनप्रकारः। इयमेव वक्रोक्तिः सहृदयहृदयाह्लादकारिणी अत एव **वक्रोक्तिः परमार्थतः काव्यजीवितं, सैव काप्यपूर्वाभिधा, सैव जीवितसर्वस्वम्**[३] इत्यादिना कुन्तकाचार्यः वक्रोक्तेर्महिमानं पल्लवयति।

---

१. वक्रोक्तिजीविते १, १०।
२. वक्रोक्तिः सकलालङ्कारसामान्यम्। तत्रैव १, ३१ वृत्तौ।
३. तत्रैव ३, ३ वृत्तौ।

काव्ये किं कथ्यते इति प्रतिपाद्य– वस्तुनो यथा महत्त्वं वर्तते तथैव कथनप्रकारस्यापि महत्त्वं वर्तते इत्यत्र विचिकित्सा नास्ति। किन्तु तत्त्वतो विचारेण अनयोर्मध्ये प्रतिपाद्यविषयो महत्तर इति निश्चितम्। अत एव–

**वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्**[1] इत्यग्निपुराणस्य–

**काव्यस्यात्मनि सङ्गिनि रसादिरूपे न कस्यचिद् विमतिः** इति महिमभट्टस्य,

**निरन्तररसोद्गारगर्भसन्दर्भनिर्भराः।**
**गिरः कवीनां जीवन्ति न कथा मात्रमाश्रिताः॥**[2]

इति स्वयं कुन्तकस्य च कथनात् काव्ये रसादिपदार्थ एव प्राधान्यात् आत्मस्थानं दधाति।

अतो विचित्राभिधारूपाया वक्रोक्तेरपि रसादिपदार्थस्य उत्कर्षकत्वे एव सार्थकता वरीवर्ति। एवञ्च वैदग्ध्यभङ्गीभणितिरूपा वक्रोक्तिः कुन्तकस्य मते काव्यजीवितरूपापि वस्तुतः विचित्रकथनप्रकारेण रसादेरेव विच्छित्तिवैचित्र्यं साधयति। अतः कुन्तकस्य या कापि पदवाक्य-प्रकरणप्रबन्धादिवक्रता काव्ये विलसति सा रसादिसाध्यस्य सिद्धौ साधनरूपा एव न तु स्वयं साध्यरूपा अतः काव्यजीवितकथनेनैव वक्रोक्तिः काव्यात्मत्वं न लभते। न वा काव्यात्मरूपव्यङ्ग्यरसादि-रभिव्यञ्जनं कर्तुं क्षमते तस्या अभिधारूपत्वात्।

एवञ्च वस्तुगत्या विचित्राभिधा वक्रोक्तिः साधनतयैव विच्छित्तिं जनयति न तु साध्यरूपतया।

## (घ) औचित्यविच्छित्तिः

लोकमर्यादामाधृत्य लोकव्यवहारे यथा सर्वत्र औचित्यपूर्णविधानं

---

१. अग्निपुराणे ३३९, ३३।
२. व्यक्तिविवेके पृ० ९२॥

समपेक्षितं प्रशंसितञ्च भवति, तथैव काव्येऽपि औचित्यपूर्णविधानं सर्वत्र प्रशस्यते अपेक्ष्यते च। औचित्यस्वरूपं प्रदर्शयन् आचार्यक्षेमेन्द्रः

उचितं प्राहुराचार्याः सदृशं खलु यस्य यत्।
उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।।

इति प्रतिपाद्य–

अलङ्कारास्त्वलङ्कारा गुणा एव गुणाः सदा।
औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।।

इत्येवं रूपेण औचित्यं काव्यजीवितमिति निरूपयामास। अयमत्राशयः

भूषणं तदेव भूषणं शोभाधायकं भवति यत् उचितस्थाने औचित्येन विन्यस्तं सत् समलङ्कृतजनं विभूषयति स्वयं च प्रशस्तं भवति। तदेव अनौचित्येन विन्यस्तं न केवलं स्वकीयं प्राशस्त्यं जहाति, अपि तु तथा विभूषितं जनमपि हास्यास्पदं करोति। कण्ठे मेखलया नासाग्रे कर्णाभूषणेन पाणौ नूपुरबन्धनेन, चरणे केयूरपाशेन च न के जना जरभ्गति हास्यास्पदतां दधति? एवमेव शरणागते जने शौर्यं, शत्रौ कारुण्यं च शौर्यादिगुणानां गुणत्वं निराकुर्वत् गुणवतां हास्यावहत्त्वं प्रकटयति। एवमेव काव्येऽपि रसगुणालङ्कारादयः औचित्येन प्रयुक्ता एव रसगुणालङ्कारत्वं प्रकाशयन्ति, अन्यथा ते अनौचित्येन प्रयुक्ता रसभङ्गं जनयन्ति। यतः औचित्येन विधानादेव रसादयो विच्छित्तिं प्रकटयन्ति, अत औचित्यमेव एकं काव्यस्य जीवनाधायकतत्त्वं वर्तते तेन।

औचित्यमेकमेकत्र गुणानां राशिरेकतः।
विषायते गुणग्राम औचित्यपरिवर्जितः।।[१]

---

१. धर्मबिन्दु टीका। पृ० २९।

**काव्यस्यालमलङ्कारैः किं मिथ्या जनितैर्गुणैः।**
**यस्य जीवितमौचित्यं विचिन्त्यापि न दृश्यते॥**

**उचितस्थानविन्यासादलङ्कृतिः।**
**औचित्यादच्युता नित्यं भवन्त्येव गुण गुणाः॥**[1]

इत्येवमौचित्यस्य काव्ये अनिवार्यत्वं निदर्शयन् आचार्यक्षेमेन्द्रः सर्वत्र–

**काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम्॥**[2]

इति प्रत्यपादयत्।

काव्ये औचित्यस्य एतन्महत्त्वमाचार्यानन्दवधनेनापि **औचित्योपनिबन्धस्तु रसस्योपनिषत्परा॥**[3] इत्येवं रूपेण प्रकटयाञ्चक्रे।

दृश्यते च काव्यव्यवहारे माधुर्यगुण औचित्येन विन्यस्तः शृङ्गारे एव चमत्कारं जनयति स एव रौद्रे, बीभत्से च वैरस्यमुत्पादयति। शृङ्गारे प्रशस्तापि वैदर्भी रौद्रे त्याज्या भवति एवमेव रौद्ररसाभिव्याञ्जिका गौडीया शृङ्गारकरुणादौ दोषावहा भवति। रसराजशृङ्गारः कुमारसंभवे पार्वतीपरमेश्वरालम्बनतया अनौचित्येन प्रयुक्तः रसभङ्गं जनयति। एवं रघुवंशे इन्दुमतीस्वयम्वरप्रसंङ्गे उचितालम्बनत्वेन रसराजत्वं प्रकाशयति इत्येवं प्रदर्शयतः क्षेमेन्द्रस्य मते औचित्यमेव केवलं काव्ये जीवितायते। औचित्यविच्छित्यैव काव्ये कमनीयत्वं ग्राह्यत्वञ्च भवति।

**इदमत्रावधेयम्–**

उपर्युक्तप्रकारेण औचित्यस्य महत्त्वे व्यापकत्वे च सिद्धेऽपि तस्य काव्ये आत्मत्वं सिद्धं न भवति। अत्रापि प्रश्न उत्तिष्ठते यदिदमौचित्यं स्वयं साधनं साध्यं वा। रसादेरानन्दात्मकानुभूतये रसादीनामौचित्य–

---

१. औचित्यविचारचर्चायाम् ६।
२. तत्रैव ८, १०।
३. ध्वन्यालोके ३.१४ कारिकायाम्

पूर्णविधानं भवति, उताहो औचित्यस्य चमत्काराय रसादीनां विधानं भवति। साध्यं रसादिः अथवा औचित्यम्? एतस्योत्तरं स्पष्टम्–

विवेकिनो विजानते यत् रसानुभूतये एव रसादीनां सर्वेषामौचित्य-पूर्णविधानं भवति। यथा हि विवेचकशिरोमणिः आचार्याभिनवगुप्तपादः लोचने–

**उचितशब्देन रसविषयमौचित्यं भवतीति दर्शयन् रसध्वनेः काव्यजीवितत्वं सूचयति। तदभावे हि किमपेक्षया इदमौचित्यं नाम सर्वत्रोद्‌घोष्यते।**[1] इत्येवं प्रतिपादयन् सन्देहनिमीलितलोचनानां लोचनानि समुन्मीलयति। स्वयं हि क्षेमेन्द्रः रससिद्धस्य काव्यस्य औचित्यं स्थिरं जीवितं भवतीति कथयन् रसादिना सिद्धे काव्ये औचित्यं साधनं भवतीति स्पष्टयति।

अत औचित्यमपि साधनरूपेणैव विच्छित्तिं समुत्पादयति न तु साध्यरूपेणेति पर्यवस्यति।

**(ङ्) रसविच्छितिः**

वेदाचले समुत्पन्नः अविच्छिन्नरूपेण प्रवर्धमानोऽयं वाक्य-रसपारिजातः काव्यस्य शाखाप्रशाखारूपान् सर्वान् भेदप्रभेदान् उज्जीवयति रसयति, समाह्लादयति च। अयमेव हि परमार्थकाव्यस्य परमोत्कर्षक इति विदन्ति काव्यकोविदा विवेचकाः सहृदयाश्च। अतः काव्यस्य नाटकादिप्रभेदेषु गद्यात्मकः कथाख्यायिकादिप्रभेदेषु, पद्यात्मक-मुक्तकखण्डकाव्यमहाकाव्यादिप्रभेदेषु च सर्वत्र आनन्दानुभूतये रसस्य काम्यत्वं प्रायेण सर्वैः स्वीकृतम्।

**रसो वै सः। रसं ह्येवायं लब्ध्वानन्दीभवतीति**

---

१. ध्वन्यालोकलोचने तत्रैव ।

२. तैत्तिरीयोपनिषदि २, ६।

तैत्तिरीयोपनिषद्वाक्येन परमानन्दरसात्मकभगवदाकाररूपोऽयं रसः सर्वाभीष्टफलप्रदत्वेन काव्ये सर्वाधिककाम्यो भवतीति जानाना एव आचार्या रसस्य काव्ये आत्मत्वं स्वीकुर्वन्ति।

तत्र नाट्ये काव्ये च **न हि रसादृते कश्चिदप्यर्थः प्रवर्तते**[1] इत्युद्घोषयन् भरतमुनिः तत्त्वतो रसस्य प्राधान्यं प्रतिपादयामास। यतो रसं विहाय अन्यः न कोऽप्यर्थः प्रकर्षेण उत्कर्षकत्वेन वर्तते। रस एव परमोत्कृष्टतया आस्वद्यो भवतीति तत् तात्पर्यम्।

इदं च परमं तथ्यं समर्थयन्ति अन्येऽप्याचार्याः **वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्**[2] इत्यग्निपुराणवचने, **रसादयो हि**[3] **द्वयोरपि तयोः जीवितभूताः**[4] इत्यानन्द- वर्धनाचार्यकथने, **रस आत्मा इति** राजशेखरप्रतिपादने, **रसेनैव सर्वं जीवति काव्यमि**[5]त्यभिनवगुप्तप्रतिपादने, **काव्यस्यात्मनि संज्ञिनि रसादिरूपे न कस्यचिद् विमतिः**[6] इति महिमभट्टस्य निरूपणे,

**ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः।**[7]

इति मम्मटाचार्योद्घोषणे, **रस आत्मा**[8] इति शौद्धोदनेरुद्बोधने, **आत्मा किल रस**[9] इति कर्णपूरकथने, **वाक्यं रसात्मकं काव्यम्**[10] इति

---

१. नाट्यशात्रे ६,
२. अग्निपुराणे ३३६, ३३।
३. वाच्याश्रयवाचकाश्रयव्यवहारयोरित्यर्थः'।। ध्वन्या० ३.३३ का वृत्तिः
४. तत्रैव ३, ३३ कारिकावृत्तौ।
५. काव्यमीमांसा पृ० १४।
६. ध्वन्या० २, ३ कारिका लोचने।
७. व्यक्तिविवेके पृ०* २२।
८. काव्यप्रकाशे ८, ३०, अलङ्कारशेखरे २०।
९. अलङ्कारकौस्तुभे , १।
१०. साहित्यदर्पणप्रथमपरिच्छेदे।

विश्वनाथस्य प्रतिपादने तथा एवंविधेषु अन्येषु च रसात्मकनिरूपणेषु तदेव रसविषयकं परमं तत्त्वं समुद्घाटितं भवति अतो रसात्मविषये न कस्यचिद् विमतिरित्यत्र सर्वसम्मतिः प्रतिभाति।

अयं हि परमप्रियो रसः काव्यनाट्ययोः विभावानुभावव्यभिचारिसंयोगाद् अभिव्यज्यमानः आस्वाद्यरूपः आनन्दास्वादरूपो वारसः हृदयहृदयेचर्व्यमाणो भवति। कथमयं रसोऽनुभूयते इत्यस्य विस्तरेण रसविच्छित्तिमीमांसाप्रसङ्गे विवेचनविहितमिति तत्रैव द्रष्टव्यम्।

अस्य रसस्य च परमानन्दरूपत्वमपि सर्वसम्मतम्।

यत्तु **काव्यरसस्य सुखरूपत्वे तस्य आत्मत्वं न स्यात्** न्यायशास्त्रे रसस्य सुखस्य च गुणरूपत्वात् इति तदपि न युक्तं, काव्यशास्त्रीयरसस्य लौकिकषड्रसभिन्नत्वादिव न्यायाशास्त्रीयात्मधर्मसुखादपि भिन्नत्वात्।

**आनन्द आत्मा** इत्युपनिषत्सिद्धान्तेन परमानन्द **आत्मैव रसः**[१] इति गौडीयसम्प्रदायचरमसिद्धान्तेन **च आनन्द एव आत्मा स एव च रसः**। अत एव तस्मिन् रसे माधुर्यादयो गुणास्तिष्ठन्ति। रसस्य सुखरूपे गुणत्वेन कथं गुणा गुणे तिष्ठेयुः। अतः काव्यरसानन्द आत्मरूपो भवति काव्यस्येति सर्वसम्मतम्।

एवञ्च काव्ये साध्यरूपरसस्य विच्छित्तिः चमत्कारः परमाराध्यतया काम्यते काव्यस्य सर्वाधिकसमुत्कर्षं च जनयति।

अभिव्यज्यमानो ध्वन्यमानो रस एव रसो भवति न वाच्यलक्ष्यरूप इति ध्वनिसिद्धान्तेन प्रतिपादनात् तत् सिद्धान्ते च ध्वनेः रसवस्त्वलङ्काररूपेण त्रैविध्यात् काव्यस्यात्मा ध्वनिः इति ध्वन्यात्मनि रसस्य एकाधिपतित्वं वस्तुध्वनिना अलङ्कारध्वनिना च विभज्यते। आत्म-

---

२. द्र० भक्तिरसायनम्।

सिंहासनस्य रसवस्त्वलङ्कारास्त्रयोऽपि समानभागभागिनो भवन्ति। एतस्या वस्तुस्थितेर्विवेचनमनुपदमेवाग्रिमे प्रकरणेऽवलोकनीयम्।

**( च ) ध्वनिविच्छित्तिः**

(१) व्याकरणशास्त्रीयस्फोटसिद्धान्ताज्जायमानोऽयं ध्वनिसिद्धान्तः काव्यशास्त्रे आचार्यैः प्रामुख्येन समादृतः। आनन्दवर्धनाचार्येण **काव्यस्यात्मा ध्वनिः** इति डिण्डिमनादं समुद्घोष्य काव्यात्मसिंहासने ध्वनिः[1] प्रतिष्ठापयाञ्चक्रे। ध्वनेश्च रसवस्त्वलङ्काररूपेण त्रैविध्यं प्रतिपाद्य अभिधालक्षणाभ्यां विलक्षणया व्यञ्जनया तस्य ध्वनेर्ध्वन्यमानत्वं संस्थाप्य व्यङ्ग्यस्य रसवस्त्वलङ्काररूपस्यं त्रिविधस्य ध्वनेः प्राधान्ये उत्तमकाव्यत्वञ्चाङ्गीचक्रे। यतो हि वाच्यार्थलक्ष्यार्थतात्पर्यार्थेभ्यो विलक्षणस्यास्य[2] ध्वन्यर्थस्य काव्ये प्राधान्यं चमत्कारजनकतया सर्वाधिकं महत्त्वञ्च भवति. अतोऽयमेव ध्वनिः काव्यस्यात्मेति व्यवस्थापयाम्बभूवे।

रसवस्त्वलङ्कारेषु त्रिषु ध्वनिषु वस्तुशब्दः स्वीये व्यापकार्थे यद्यपि रसालङ्कारौ आत्मसात्करोति, तथापि व्यावहारिकस्पष्टतार्थं रसालङ्कारयोः पृथक्त्वेन उपादानम्। अलङ्कारध्वनेः अलङ्कार्यतयापि अलङ्कारशब्देन व्यवहारोऽत्र ब्राह्मणश्रमणन्यायेन कृतः।

महाकवीनां काव्येषु गुणालङ्कारादिभ्यो विलक्षणमिदं प्रतीयमानं वस्तु। यथाहि ललनासु करचरणाद्यवयवेभ्यो विलक्षणं सर्वाधिकमाकर्षकं तल्लावण्यं भवति, तथैव काव्येऽपि प्रतीयमानं वस्त्वलङ्काररसादिकं सर्वातिशायि भवति।

एतत्प्रतीयमानार्थस्य अलङ्कारादिभ्यो वैलक्षण्यं, तस्यैव च काव्ये प्राधान्यं भवतीति

---

१. ध्वन्यालोके १, १। अत्र ध्वनिः ध्वन्यते इति ध्वनिः रसादिरूपः।

२. तस्मादभिधातात्पर्यलक्षणाव्यतिरिक्तश्चतुर्थोऽसौ व्यापारः ध्वननद्योतनव्यञ्जनप्रत्यायनावगमनादिसोदरव्यपदेशनिरूपितोऽवगन्तव्यः। तत्रैव १, ४ का लोचने पृ० २१।

पाश्चात्यजगतो दार्शनिकाः काव्यालोचकाश्चापि स्वकुर्वते। शुद्धपदाञ्चिता अलङ्कृता सत्यपि कविता आत्मशून्या प्रतिभाति यदि तत्र तत् तत्त्वं नास्ति, यथा काचिद् वाग्व्यवहारे विदग्धापि विनम्रापि वनिता निष्प्राणा इव निगद्यते इति प्रतिपादयति **काण्ट**महोदयः[१]।

**पोप**महादेयोऽपि आन्दवर्धनमतं समर्थयन् ललनाशरीरे अधर-नेत्राद्यङ्गेभ्यो[२] भिन्नं समस्तावयवप्रभावपरिणाम एव सौन्दर्यं कथयति।[३] एवमेव **होरेस**-- महोदयोऽपि बाह्यसौन्दर्याद्विलक्षणमन्तस्तत्त्वात्मकमेकं सौन्दर्यं काव्ये सङ्केतयति।[४]

एतेन निश्चीयते यत् भारतीयकाव्यालोचका इव पाश्चात्त्यमनी-षिणोऽपि ललनालावण्यमिव काव्ये प्रतीयमानमर्थं स्वीकृत्य तस्य आत्मत्वं प्राधान्यं वा स्वीकुर्वन्ति।

एवञ्च ध्वनिवादिनाम् आनन्दवर्धन[५]मम्मट[६]रुय्यक[७]नरेन्द्रप्रभसूरि[८]-विद्याधर[९]प्रभृतीनामाचार्याणां मते रसवस्त्वलङ्काररूपस्त्रिविधोऽपि ध्वनिः काव्यस्यात्मा त्रिविधेनापि ध्वनिना जायमाना काव्यविच्छित्तिः काव्ये चमत्कारं जनयति।

---

1. A poem may be very neat and elegant, but without spirit-..... even of a woman we say that she is pretty, an agreeable talker and courteous, but without spirit,. Kant. *The Critique of Judgement* sec. 49. See *Western Aesthetics* pp.356
2. In wit, as nature, what affects own hearts is not the exactness of peculiar parts; is not a lip,or eye, We beauty call But the jointforce and full result of all. *An Essay on Critism. p. 8.*
3. It is not enough for poems to have beauty; They must also be pleas-ing and lead the Iistener's soul whether they will. *Horale's Art of poerty, P. uu*.

४. काव्यस्यात्मा ध्वनिः। काव्यस्यात्मा स एव (प्रतीयमानार्थः।

५. इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः। का० प्र० १, ४।

६. तस्माद् विषय एवं व्यङ्ग्यनामा जीवितत्वेन वक्तव्यः। अलं० स० पृ० ९।

७. शब्दार्थसौन्दर्यतनोः काव्यस्यात्मा ध्वनिर्मतः। अलं० महादधौ ३, ६४।

८. शब्दार्थौ वपुरस्य तत्र विबुधैरात्माभ्यधायि ध्वनिः। एकावल्याम् १, १३।

(२) परमत्र विवेचनीयम्

रसवस्त्वलङ्काररूपस्त्रिविधोऽपि ध्वनिः किं समानरूपेण विच्छित्तिं साधयति, उताहो तत्र किमपि तारतम्यं वर्तते। वस्तुतो विवेचनेन तत्र तारतम्यं स्पष्टं प्रतीयते। परमानन्दस्वरूपरसध्वनिजन्या वस्तुतो रसध्वनिस्वरूपैव विच्छित्तिः स्वयं साध्यरूपा ।

ततः परं काव्ये किमप्यन्यत् नापेक्ष्यते। काव्ये सा पराकाष्ठा सैव परागतिः। रसचमत्कारार्थमेव अन्यानि सर्वाणि साधनानि अपेक्षितानि भवन्ति।

वस्तुध्वनौ अलङ्कारध्वनौ च इयं स्थितिर्नास्ति। वाच्यवस्तुनोऽपेक्षया ध्वन्यमानवस्तुनो व्यञ्जनाव्यापारजन्या कापि विशिष्टा विच्छित्तिः भवतीति स्वीकृतेऽपि इयं प्रतीयमानार्थविच्छित्तिः रसभावादिविच्छित्त्यन्तरे साधनतामादधाति न तु रसध्वनिरिव स्वयं साध्यताम्।

एवमेव वाच्यालङ्कारापेक्षया प्रतीयमानालङ्कारः अर्थात् अलङ्कारध्वनिः विशिष्टोऽपि रसध्वनिसमकक्षतां नावगाहते। अलङ्कारध्वनिरपि रसभावादिध्वनेः समुत्कर्षकतया तस्य रसादिध्वनेः उपकारको भवति। अत एव पक्षपातविरहितेन विवेचकेन अभिनवगुप्ताचार्येण स्पष्टं प्रत्यपादि–

**स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम्। इतिहासबलात् प्रक्रान्ते वृत्तिग्रन्थबलाच्च। तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौ तावित्यभिप्रायेण ध्वनिः काव्यस्यात्मेति सामान्येनोक्तम्[१] इति।**

अन्यच्च **काव्यस्यात्मा स एवार्थः**, इत्यत्र स एवे त्येवकारेणेदमाह नान्य आत्मेति।[२]

१. ध्वन्यालोके १, ५ का० लोचने पृ० ३१।
२. तत्रैव लोचने पृ० ३२।

अभिनवगुप्तपाद: उपर्युक्तकथने वस्तुतो यथार्थवादी प्रतीयते। वस्तुध्वनेरलङ्कारध्वनेश्च निम्नोक्तोदाहरणाभ्यां याथार्थ्यमवगन्तुं शक्यते। तथा हि–

**भ्रमधार्मिक! विश्रब्धः स श्वाद्य मारितस्तेन।**
**गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन॥**

पुष्पावचयार्थं स्वसङ्केतस्थानभूते गोदावरीनदीकच्छकुञ्जे यान्तम् अभिसारविघ्नकारिणं कञ्चन धार्मिकं भीषयितुं कस्याश्चिदभिसारिण्याः स्वविनयं सूचयन्त्या उक्तिरियम्। हे धार्मिक! त्वं विश्वस्तः सन् यथेच्छं विचर। यद्भयाद् भ्रमणं त्यक्तमासीत् स श्वा अद्य गोदावरीकच्छकुञ्ज-वासिना दर्पयुक्तेन सिंहेन मारितः।

**अत्र शुनो निवृत्त्या भ्रमणं (अव्याहतं) वाच्यम्।**

गोदानदी तीरे सिंहोपलब्ध्या भ्रमणनिषेधरूपं वस्तु व्यङ्ग्यम्। अयं च भ्रमणनिषेधरूपो वस्तुध्वनिः स्वैरविहारिण्या रतिभावे उपकारकतया भावस्य साधनतामाश्रयति। अतो वस्तुध्वनिः नास्ति स्वयं साध्यरूपः।

एवमेव अलङ्कारध्वनिस्थले–

**भद्रात्मनो दुरधिरोहतनोर्विशाल–**
**वंशोन्नतेः कृतशिलीमुखसंग्रहस्य।**
**यस्यानुपप्लुतगतेः परवारणस्य**
**दानाम्बुसेकसुभगः सततं करोऽभूत्॥ इत्यत्र॥**

इदं कस्यचिद् राज्ञो वर्णनम्–

अर्थात् प्रकृतस्य वर्णनीयस्य राज्ञः करः सततं दानस्य कृते गृहीतं यदम्बु तेन सुभगः शोभनोऽभूत्। कीदृशस्य राज्ञः भद्रात्मनः भद्रः शोभनः कल्याणकरः आत्मास्वरूपम् अन्तःकरणं वा यस्य तथाभूतस्य दुरधिरोहतनोः दुरधिरोहा परैः अनभिभवनीया तनुः शरीरं यस्य तथाभूतस्य विशालवंशोन्नतेः विशाले महति वंशे कुले उन्नतिः आधिक्यं महत्त्वं ख्यातिर्वा यस्य, अथवा विशालवंशस्य उन्नतिर्वृद्धिर्वा यस्मात् तादृशस्य;

कृतशिलीमुखसंग्रहस्य कृतः शिलीमुखानां बाणानां संग्रहः शत्रुविनाशाय सञ्चयः, अथवा सम्यक् ग्रहः अभ्यासदार्ढ्यं येन तथा विधस्य; अनुपप्लुतगतेः अनुप्लुता अबाधितगतिः ज्ञानं यस्य तथाभूतस्य, अथवा अनुपद्रुता गतिः प्रयाणं यस्य, अनुप्लुतानाम् अदुष्टानाम् हितकर्ता वा एतादृशस्य; परवारणस्य परान् शत्रून् वारयतीति परवारणः शत्रुनिवारकस्तस्य प्रकृतस्य राज्ञः[1] दानवारिसेचनेन हस्तः प्राशस्त्यं प्राप्नोतीति प्राकरणिकोऽर्थः। अत्र प्रकरणेन उपर्युक्तार्थेऽभिधाया नियन्त्रणादपि श्लिष्टशब्दविन्यासरूपकविकौशलशालिनां भद्रात्मन इत्यादीनां पदानाम् अप्राकरणिकोऽप्यपरोऽर्थोऽवबुध्यते। यथा–

भद्रात्मनः भद्रजातीयस्य, दुरधिरोहतनोः अत्युच्चत्वाद् दुःखाधिरोह्यशरीरस्य, विशालवंशोन्नतेः विशालवंशवत्दीर्घवेणुवत् उन्नतिः उच्चता यस्य, अथवा वंशस्य पृष्ठदण्डस्य उन्नतिः वंशोन्नतिः, विशाला वंशो[2]न्नतिर्यस्य तादृशस्य, कृतशिलीमुखसंग्रहस्य कृतभ्रमरसंग्रहस्य अनुपप्लुतगतेः अनुद्धतधीरगमनस्य, परवारणस्य उत्कृष्टगजस्य करः शुण्डादण्डः सततं दानाम्बुसेकसुभगः मदजलप्रस्रवणसुन्दरः अभूत्।

अत्र प्राकाणिको राजा वाच्यः। अप्राकरणिको हस्ती प्रतीयमानः। अत्र भद्रात्मन इत्यादिशब्दानां राजरूपेऽर्थे प्रकरणेन अभिधया नियन्त्रणेऽपि सहृदयानां प्रतिभासामर्थ्यात् व्यञ्जनया गजरू [illegible]स्य प्रतीतिर्भवति। ततश्च उक्ता विशेषणविशिष्टहस्तिप्रतीतौ नृपगजयोर्द्वयोरप्यर्थयोर्मिथः सम्बन्धे उपमानोपमेयभावमूलक उपमालङ्कारो व्यज्यते उपमाकृतास्वादानुभवबलात्। ध्वन्यमानोपमालङ्कारद्वारैव तादृशगज इव प्रकृतो राजा अस्ति इति सम्बद्धार्थद्वयबोधो जायते अन्यथा वाक्यभेदापत्तिः स्यात्। अत्रेदं विचार्यते।

प्रकृते ध्वन्यमानोपमालङ्कारविच्छित्तिः स्वयं चरमोत्कर्षरूपेण आस्वाद्यते, अथवा नृपविषयकरतिभावस्य उत्कर्षकतया। वस्तुतोऽत्र

---

१. भद्रो मन्दो मृगश्चैव विज्ञेया त्रिविधा गजाः। हलायुधकोशे २१५।

२. वंशः सङ्घान्वये वेणौ पृष्ठाद्यवयवेऽपि च

उपमालङ्कारध्वनिः नृपविषयकभावं प्रति साधनतयैव स्वकीयां विच्छित्तिं जनयति।

अतो वस्तुध्वनिरिव अलङ्कारध्वनिरपि रसादिध्वनेरुपकारकः। एतयोरुभयोः पर्यवसानं रसादिध्वनावेव भवति। तेन रस एव वस्तुतः काव्यस्यात्मा इत्यभिनवगुप्तपादकथनं सर्वथा समीचीनं, यच्च पण्डितराजादिभिरपि तथैव समर्थितम्।[१] एवञ्च काव्यविच्छित्तिमीमांसया **इदमेव प्रतीयते यत् परमानन्दस्वरूपा रसध्वनिविच्छित्तिः सत्कविना काव्ये चरमसाध्यतया संसाध्य गुणालङ्कारादिविच्छित्तिस्तु तत्साधनतया उपास्या तथैव च सहृदयैर्वस्तुस्थित्यनुसारं सा समाराधनीयेति शम्।**

**वर्षे स्वर्णजयन्त्या, भारतस्वातन्त्र्यसम्प्राप्तेः।**
**वसुनिधिरत्नसुधांशौ, संस्थानप्ररेणान्मयका।।**

**व्युत्पित्सूनां हि व्युत्पत्त्यै विदुषां प्रीतये तथा।**
**काव्यविच्छित्तिमीमांसा कृता विज्ञमुदावहा।। इति।**

---

१. रसवस्त्वलङ्कारार्थान्तरसंक्रमितात्यन्ततिरस्कृतरूपे पञ्चात्मके ध्वनौ परम-रमणीयतया रसध्वनेस्तदात्मा रसस्तावदभिधीयते। परमाह्लादाविनाभावितया प्रतीयमानः प्रपञ्चेऽस्मिन्रसो रमणीयतामावहतीति निर्विवादम्।
रसगङ्गाधरे पृ० ३६, ५०।
रसो वै सः रसं ह्येवायं लब्ध्वानन्दी स्यादिति श्रुतिः
पक्षश्चरम एवात्र परमः परमास्पदम्।। साहित्यसारे ४, १५। इति

## ग्रन्थकारानुक्रमेण

### सहायकग्रन्थानुक्रमणिका

| | |
|---|---|
| अच्युतराय: | साहित्यसार: |
| अप्पयदीक्षित: | कुवलयानन्द: |
| अप्पयदीक्षित: | चित्रमीमांसा |
| अभिनवगुप्त: | ध्वन्यालोकलोचनम् |
| अमरसिंह: | अमरकोश: |
| अमरुक: | शतकम् |
| अमृतानन्दयोगी | अलङ्कारसंग्रह: |
| अरस्तू | काव्यशास्त्रम् |
| अल्लराज: | रसरत्नप्रदीपिका |
| उपनिषत्संग्रह: | |
| आनन्दवर्धन: | ध्वन्यालोक: |
| इन्दुराज: | लघुवृत्ति:काव्यालङ्कारसार-संग्रहटीका |
| उद्भट: | काव्यालङ्कारसारसंग्रह: |
| कविकर्णपूर: | अलङ्कारकौस्तुभ: |
| कविराज: | राघवपाण्डवीयम |

| | |
|---|---|
| कात्यायनवार्तिकम् | कात्यायनः |
| कालिदासः | अभिज्ञानशाकुन्तलम् |
| कालिदासः | विक्रमोर्वशीयम् |
| कालिदासः | मालविकाग्निमित्रम् |
| कालिदासः | रघुवंशम् |
| कालिदासः | कुमारसंभवम् |
| कालिदासः | मेघदूतम् |
| कुन्तकः | वक्रोक्तिजीवितम् |
| केशवमिश्रः | अलङ्कारशेखरः |
| कौण्डभट्टः | वैयाकरणभूषणसारः |
| क्षेमेन्द्रः | औचित्यविचारचर्चा |
| क्षेमेन्द्रः | सुवृत्ततिलकम् |
| गोविन्दठक्कुरः | काव्यप्रदीपः |
| गोविन्दराजः | वाल्मीकिरामायणव्याख्या |
| गङ्गानन्दकविराजः | कर्णभूषणम् |
| चिरञ्जीवभट्टाचार्यः | काव्यविलासः |
| जगन्नाथः,पण्डितराजः | रसगङ्गाधरः |
| जयदेवः | चन्द्रलोकः |
| जयन्तभट्टः | न्यायमञ्जरी |
| जयमङ्गलः | कविशिक्षा |
| जयमङ्गलः | जयमङ्गलाटीका |
| जयरथः | ( अलङ्कारसर्वस्वविमर्शिनीः ) |
| जैमिनिः | मीमांसादर्शनम् |
| भट्टतौतः | काव्यकौतुकम् ( लोचने निर्दिष्टम् ) |

| | |
|---|---|
| दण्डी | काव्यादर्शः |
| धनञ्जयः | दशरूपकम् |
| धनिकः | दशरूपावलोकः |
| धर्मदाससूरिः | विदग्धमुखमण्डनम् |
| नमिसाधुः | रुद्रटालङ्कारटिप्पणम् |
| नरेन्द्रप्रभसूरिः | अलङ्कारमहोदधिः |
| नागेशः | वैयाकरणसिद्धान्तमञ्जूषा |
| नीलकण्ठदीक्षितः | नलचरितम् |
| पतञ्जलिः | महाभाष्यम् |
| पद्मगुप्तः | नवसाहसाङ्कचरितम् |
| पुण्डरीकःपौण्डरीकरामेश्वरः- | रससिन्धुः |
| प्रकाशवर्षः | रसार्णवालङ्कारः |
| प्रभाकरभट्टः | रसप्रदीपः |
| बाणभट्टः | कादम्बरी |
| बाणभट्टः | हर्षचरितम् |
| भगीरथझाः | युग्मतत्त्वसमीक्षा |
| भट्टनायकः | हृदयदर्पणः |
| भवभूतिः | उत्तररामचरितम् |
| भवभूतिः | महावीरचरितम् |
| भवभूतिः | मालतीमाधवम् |
| भरतः | नाट्यशास्त्रम् |
| भर्तृहरिः | वाक्यपदीयम् |
| भानुदत्तमिश्रः | रसमञ्जरी |
| भानुदत्तः | रसतरङ्गिणी |

| | |
|---|---|
| भामहः | काव्यालङ्कारः/ भामहालङ्कारः |
| भारविः | किरातार्जुनीयम् |
| भावदेवसूरिः | काव्यालङ्कारसारः |
| भूदेवशुक्लः | रसविलासः |
| भोजराजः | सरस्वतीकण्ठाभरणम् |
| भोजराजः | शृङ्गारप्रकाशः |
| मङ्खकः | अलङ्कारसूत्रम् |
| मधुसूदनसरस्वतीः | भक्तिरसायनम् |
| मम्मटः | काव्यप्रकाशः |
| मम्मटः | शब्दव्यापारविचारः |
| माघः | शिशुपालवधम् |
| माधवाचार्यः | सर्वदर्शनसंग्रहः |
| मुकुलभट्टः | अभिधावृत्तिमातृका |
| मुरारिदानः | यशवन्तयशोभूषणम् |
| यास्कः | निरुक्तम् |
| राजचूडामणिदीक्षितः | काव्यदर्पणः |
| राजशेखरः | काव्यमीमांसा |
| राजशेखरः | बालरामायणम् |
| राजशेखरः | कर्मूरमञ्जरी |
| राधागोविन्दनाथः | श्रीगौरतत्त्वम् |
| रामचन्द्रः | नाट्यदर्पणः |
| रुद्रटः | कव्यालङ्कारः/रुद्रटालङ्कारः |
| रुद्रभट्टः | शृङ्गारतिलकम् |
| रुय्यकः | अलङ्कारसर्वस्वम् |

| | |
|---|---|
| रुय्यकः | साहित्यमीमांसा |
| रूपगोस्वामी | उज्ज्वलनीलमणिः |
| रूपगोस्वामी | भक्तिरसामृतसिन्धुः |
| प्रथमवाग्भटः | काव्यालङ्कारः/वाग्भटालङ्कारः |
| द्वितीयवाग्भटः | काव्यानुशासनम् |
| वामनः | काव्यालङ्कारसूत्रवृत्तिः |
| वाल्मीकिः | रामायणम् |
| विद्याधरः | एकावली |
| विद्यानाथः | प्रतापरुद्रयशोभूषणम् |
| विद्यापतिः | पुरुषपरीक्षा |
| विद्याभूषणः | साहित्यकौमुदी |
| विद्याभूषणः | प्रमेयरत्नावली |
| विल्हणः | विक्रमाङ्कदेवचरितम् |
| विश्वनाथकविराजः | साहित्यदर्पणः |
| विश्वनाथपञ्चाननः | मुक्तावली |
| विश्वेश्वरः | अलङ्कारकौस्तुभः |
| विश्वेश्वरपाण्डेयः | रसचन्द्रिका |
| वीरराघवः | उत्तररामचरितव्याख्या |
| वेणीदत्तः | रसकौस्तुभः |
| व्यासः | विष्णुधर्मोत्तरपुराणम् |
| व्यासः | अग्निपुराणम् |
| व्यासः | महाभारतम् |
| शार्ङ्गदेवः | सङ्गीतरत्नाकरः |
| शारदातनयः | भावप्रकाशनम् |

| | |
|---|---|
| शिङ्गभूपालः | रसार्णवसुधाकरः |
| शोभाकरमित्रः | अलङ्कारत्नाकरः |
| शौद्धोदनिः | अलङ्कारसूत्रम् |
| शौनकः | बृहद्देवता |
| श्रीमत्स्थविरः | अनुयोगद्वारसूत्रम् |
| श्रीहर्षः | नैषधीयचरितम् |
| समुद्रबन्धः | अलङ्कारसर्वस्वटीका |
| सर्वेश्वरः | साहित्यसारः |
| हरिपालदेवः | सङ्गीतसुधाकरः |
| हरिभद्रः | धर्मबिन्धुटीका |
| हेमचन्द्रः | काव्यानुशासनम् |

## English Works

| | |
|---|---|
| Aristotle | Poetics and Rhetorics |
| Croce | Aesthetics |
| Demetrius | on Style |
| Horace | Art of Poetry |
| I.A. Rechards | Principles of Literary Criticism |
| J. Muddletion Murry | The Problem of style |
| Longinus | On the Sublime |
| Matheu Omeld | Preface to Poems |
| P. V. Kane | History of Sanskrit Poetics |
| Pope | Essays on Criticism |
| Raghavan | Bhoja's Śṛṅgāra Prakāśa |
| Raghavan | Number of Rasas |

| | |
|---|---|
| Raghavan | Some concepts of the Alaṅkāra Śāstra |
| Sankaran | Some aspects of literary criticism. |
| S. K. De | History of Sanskrit Poetics |
| S. K. De | History of Sanskrit Lit |
| Words worth | Preface to Lyrical Ballads |
| Words worth | Prefaces and Essays on Poetry. |
| Suryakant | Kṣemendra studies. |

